इति श्री गौड़वंशावतंसेन घनश्याम शर्म्मणा त्मात्मजेन श्री प्रभुदत्तशर्म्मणा श्राद्ध काशिकायाः सूचन पत्रँव्विरच्यमुद्रितम् ।



# कात्यायन विरचितं श्राद्धसूत्रम्।

## काशिकाव्याख्यासंवलितम्।

प्रथमाकण्डिका।

श्रीगणेशाय नमः।

यस्य प्रसादपयसा क्रतुपादपास्तं कात्यायनं मुनिवरं शिरसाभिवन्दे ॥ सिक्ताः फलन्ति यजुषामिह याजकानां स्वर्गोद्भवानि विविधानि फलान्यजस्रम्॥१॥कर्कोऽव्याख्यदिदं(१)गभीरवचनैःसूत्रं यतोऽस्मादभू दुर्बोधस्य ततोहलायुधकृति व्याख्यातथाप्यस्फुटम् ॥ भूयोपिप्रतिषेधकारिवचनैः स्मार्तैर्मयाकाशिका सूत्रस्योपरिसंशयौघतिमिरध्वंसाय संतन्यते ॥ २ ॥ सूत्रार्थव्यञ्जनाद्वाक्यै विशेषोक्तिप्रकाशनात्॥ अस्यान्वर्थमिदंनाम ग्रन्थस्यश्राद्धकाशिका ॥ ३ ॥ नित्यानन्दइतीहयाज्ञिकवरो जातस्तदीयःसुतः स्मार्त्ताग्नौविदितक्रियोतिमुख इत्याख्योजगत्यद्भुतः ॥ तत्पुत्रोप्यभवत्स्मृतिज्ञचतुरः शास्त्रे ष्वधीतीश्रुतौ विष्णुर्मिश्रइमन्निवन्धमकरोत्कृपाःकृतीतत्सुतः ॥ ४ ॥ तत्रपूर्वां पौर्णमासीमुत्तरांवोपवसेदित्यादिना श्रौतकर्माण्युपदिश्य अथातोगृह्यस्थालीपाकानामित्यादिना स्मार्तान्यथाम्नायावशिष्टम् श्राद्धकर्मवक्तव्यमिति सूत्रमारभते ॥

## * अपरपक्षेश्राद्धंकुर्वीत ॥ १ ॥

॥ अपरपक्षः । कृष्णपक्षः चांद्रमासेशुक्लकृष्णपक्षयोः पूर्वापरत्वसंभवात् ॥ श्राद्धमितिपिंडप्रदानंकर्म । कुर्वीतेतिविधा-

(१) गम्भीर इति खपुस्तक पाठ निम्न गभीर गम्भीर मित्युभयोर्त्तं

यकंपदं ननुत्रिपदमिदंसूत्रं तत्रपदत्रयैक्यैकत्वमनुपपन्नं तथाहि प्रौष्ठपद्यामपरपक्षे मासिमासिचैवमिति शौनकः॥ अनेनविधिनाश्राद्धं त्रिरब्दस्येहनिर्वपेत्। हेमंतग्रीष्मवर्षासु पांच याज्ञियमन्वहमिति मनुः॥ कन्याकुम्भवृषस्थेर्के कृष्णपक्षेषु सर्वदेति मात्स्यं। यत्तु वचनेस्वपरपक्षेषु कर्त्तव्यतोपदेशात्॥ तथाश्वयुक्कृष्णपक्षेतु श्राद्धं कुर्याद्दिनेदिनइतिवचनात् प्रतिदिनकर्तव्यतया श्राद्धानीतिवक्तुमुचितत्वात्। ब्राह्मणादि चातुर्वर्ण्यापेक्षया कुर्वीरन्नितिवक्तुमौचित्याच्चेति भवत्वापरपक्षेषु श्राद्धानिकुर्वीरन्नितिसूत्रमुपनेतव्यम् अत्रोच्यते अपरपक्षेष्वितिबहुत्वमुपपन्नमितियदुक्तं तन्न तथासति सर्वसामान्येनास्यापरपक्षस्यवैशिष्ट्यानुपपत्तेः। तथाच पुराणसमुच्चये। पक्षौ; शुक्लपदे.पक्षां षट्पञ्चाशपरेस्मृताः। तेषां पुण्यतमःपक्षः आषाढ्याःपंचमस्तुयस्तथादि। यदपि श्राद्धानीतिवक्तुमुचितमिति तन्न तथासत्येकोद्दिष्ट पार्वण नित्यश्राद्धादीनि प्राप्नुयुस्तन्माभूदिति पार्वणरूपत्वेनैकवचनमुक्तम्॥ तथाचोक्तम्। कन्यागते सवितरि दिनानि दश पंचच॥ पार्वणेनैवविधिना तत्रश्राद्धंविधीयतइति नन्वेतदैक्ये पार्वणत्वे चतुर्दश्यादौपार्वणादिनिषेधस्य कागतिरितिचेन्न तस्यश्राद्ध पक्षव्यतिरिक्तश्राद्धेषु त्रिभागादिपक्षविभागेषु चतुर्दश्यांपार्वण निषेधस्यपर्यवसानात् मनुरपि कृष्णपक्षेदशम्यादौ वर्जयित्वाचतुर्दशीम्। श्राद्धेप्रशस्तास्तिथयो यथैतानतथेतराः। पक्षश्राद्धेतु कृष्णाजिनिः नभस्यस्यापरेपक्षे श्राद्धं कार्यंदिनेदिने नैवनन्दादिवर्ज्यस्यान्नैववर्ज्या चतुर्दशीति यदपि चातुर्वर्ण्यापेक्षयाकुर्वीरन्निति तदपिन तथासत्यकृतानधिकृतानामधिकारःस्यात्तन्माभूदितिकुर्वीतेत्यधि कारि

विशेषणेनैक्यमुक्तम्। ततश्च सर्वापरपक्षेषुहेमन्तग्रीष्मवर्षापरपक्षास्तेषु कन्याकुम्भहृषस्थेर्केनय: तत्रापिभाद्रपदापरपक्ष: मुख्यतम: कालस्तत्रपार्वणमधिकारीकुर्यादितिसिद्धम्। एवंसतिकालान्तरानुपदेशादमावास्यादौ श्राद्धन्नस्यादितिचेत्। अपरपक्षशब्दस्योपलक्षणतया तत्संग्रहोपपत्ते:। नन्वेवमपिकृष्णपक्षइतिवाच्येऽपरपक्षइतिगौरवंकिमर्थम्॥ पित्र्यकर्मणिप्रतिपदादौ चान्द्रमसोच्चारणज्ञापनार्थमित्यदोष: तथाचोक्तं। आब्दिकेपितृकृत्येच मासश्चान्द्र:प्रशस्यते। तथा सौरमासोविवाहादौ यज्ञादौसावन:स्मृत:। पार्वणेचाष्टकाश्राद्धे चान्द्रोमासोमहालयइति। बृहस्पतिरपि रवेरभ्युदयेमानं चन्द्रस्यपितृकर्मणि। तथा तथैवपितृकृत्यादौ मासश्चान्द्रमस:स्मृत:। अपिच विवाहादौस्मृत:सौरो यज्ञादौसावन: स्मृत: शेषकर्मसु चान्द्र:स्यादेषमासविधि:स्मृतइति। अत्रैतच्चिन्त्यते। किम्पक्षश्राद्धंनित्यं काम्यंवेति। तत्रकाम्यमित्येके। नाश्नन्ति पितरस्तेषां ज्ञात्वामनसियोनर:। पक्षश्राद्धं नकुरुते तस्यरक्तम्पिबंतिते इत्यकरणेप्रत्यवायश्रवणात्। शाकेनापि नापरं पक्षमतिक्रामेदितिसूत्राच्च नित्यमित्यन्ये। नोभयं। पितृगाथा सदैवात्र गीयते ब्रह्मवादिभि:॥ कदान:संततावग्र्य: सकश्चिद्भवितासुत:। पितृपक्षे सदाश्राद्धं पूर्णपक्षं प्रदास्यतीत्यादिना तप्रतीक्षामहेसर्वे मृत्युदिमिवकर्षका:। काम्यदायीभवेत्कश्चित्कुलेऽस्मच्छ्राद्धदोनरइत्यादिना काम्यत्वस्यचप्रतीते:। तस्मादुभयरूपत्वंयुक्तम्। तत्रनित्यकाम्ययो: सङ्कटेकाम्यस्यबलवत्त्वान्नित्यप्रसङ्गात्सिध्यतीति न्यायाच्च काम्यानुष्ठानेनैव नित्यस्यापिसिद्धि:। तथाचसङ्ग्रहकृत्। काम्यं तंत्रेणनित्यस:तन्त्रश्राद्ध-

श्राद्धं कुर्यादतन्द्रितः पिण्डदानन्नकुर्वीत तच्चमासत्रयवासरे ॥ वैशाखस्यतृतीयायां नवम्यांकार्त्तिकस्यच श्राद्धंसंक्रांतिवत्कुर्यात् पिंडनिर्वपणम्विना। युगादौपितृनक्षत्रे तथामन्वन्तरादिषु। अर्घपिंडन्नकुर्वीत वैष्णवंश्राद्धमाचरेदित्यादीनि वाक्यान्यनर्थकानि स्युरितिचेत्सत्यं एतानिवाक्यानि तिथिवारनक्षत्रसंक्रांतियुगादिनिमित्तक्रियमाणेषु काम्यश्राद्धेषुपिण्डदानंनिषेधन्ति। नपुनः पक्षश्राद्धतिथ्याश्रयादिनिमित्तश्राद्धेष्वित्यविरोधः। अन्यथावारेपातेच सङ्क्रान्तावित्यादिभिर्विरोधात् (१) अथ पार्वणेनैवविधिनेत्युक्तं॥ तत्रैकपार्वणं किंवाद्विपार्वणम् उतचतुःपार्वणञ्चेति पक्षश्राद्धे त्रिपार्वणैकोद्दिष्टयोरप्राप्तत्वात् सर्वत्रापिपार्वणधर्मत्वात्त्रयाणांविहितत्वाच्चेति। तथाह्येकपार्वणे मात्स्यं। ततः प्रभृतिसंक्रान्तावुपरागादिकर्मसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टंमृतेहनि। प्रजापतिरपि। संक्रांतावुपरागेच वर्षोत्सवमहालये निर्वपेत् पिण्डत्रितयमितिप्राहप्रजापतिरिति। द्विपार्वणेतु कात्यायनः कर्षूसमन्वितंमुक्त्वा तथाद्यंश्राद्धषोडशं प्रत्याब्दिकंविशेषेषु पिण्डाःस्युःषडितिस्थितिरिति। चतुः पार्वणेतु कात्यायनः। कुर्याद्द्वादशदैवत्यम् प्रेतपक्षेतु सर्वदा। यथातीर्थेगयायाञ्चएषधर्मः सनातनः। आदौपिताततोमाताततोमातामहस्तथा। मातामह्यस्ततोदद्यात्प्रेतपक्षेतुसर्वदा॥ सुमंतुः। पितृभ्यःप्रथमन्दद्यान्मातृभ्य-

(१) किंश्राद्धंसाग्निकस्यैवाधिकारःउतनिरग्निकस्यापीत्यत्रकर्काचार्येणनिर्णीतमग्नौकरणरूपस्याङ्गस्याग्न्यधिकरणत्वात्तदुपमर्दाच्छ्राग्निकस्यैवयत्रान्निं तरस्य नपैतृयज्ञियोहोमोलौकिकेग्नौविधीयतइतिनिषेधात् तत्रचदारसग्रहपूर्वककर्मावसथ्याधानतत्पूर्विकाश्चकर्मान्तरेप्रवृत्तिरित्यतोपिनानग्निमतोधिकारइतियत्तूक्तं अल्पभ.चेत्तुविप्रस्य पाण वेवोपपादयेदिति तदप्यकृतावसथ्याभ्युदयिकविषयं अनग्निमतोपिश्राद्धेधि-

स्तदनन्तरम् ॥ ततोमातामहेभ्यश्चतत्पत्नीभ्यस्तथैवच ॥ गया-
याञ्चतथातीर्थेप्रेतपक्षेविशेषतः । कुर्याद्द्वादशदैवत्यमेकोद्दिष्टमतः
परं । एवचनविप्रतिपत्त्याबुच्यते । तत्रैकपार्वणचतुःपार्वणयोर्य-
थाक्रममाश्वनवमीविषयत्वेनपरिशेष्या द्विपार्वणमेवपक्षश्राद्धे व्य-
वतिष्ठते । तथाच वृद्धयाज्ञवल्क्यः । पितापितामहश्चैवतथैवप्र-
पितामहः ॥ समीहन्तेसुतान्सर्वे मातृपक्षेविशेषतः ॥ भुंजन्ति-
विप्रकायेषुपितरोन्तर्हिता.सदा ॥ तस्माद्द्विमान्पितॄन्विद्यात्पितॄंश्च-
त्सम्पूजयेत् । द्विपार्वणम्मकर्त्तव्यंविनाश्राद्धक्षयेहनि । पितरो-
यत्रपूज्यन्तेतत्रमातामहादयः ॥ अविशेषेणकर्त्तव्यं विशेषान्न-
रकम्व्रजेदितिवृद्धयमवचनात् । व्यासोपि ॥ पितृमातामहा
श्चैव द्विजश्राद्धेनतर्पयेदिति । पुलस्त्य.। मातुःपितरमारभ्य त्रयो-
मातामहाःस्मृताः । तेषान्तु पितृवच्छ्राद्धंकुर्युर्दुहितृसूनवइति ।
स्कान्दे। पार्वणङ्कुरुते यस्तुकेवलम् पितृहेतुतः । मातामह्य
न्नकुरुते पितृहासोपिजायत इति। सूत्रकारोपि। त्रींस्त्रीन्पि-
ण्डानिति। एकचतुःपार्वणे क्षयाश्वनवमीविषये । तथाचपारा-
शरः ॥ पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेकगो-
त्राणा मेकस्यैवस्मृतेहनि ॥ नवम्यान्तु वृद्धयाज्ञवल्क्यः । गयायां
पुष्करेचैवतथैवान्वष्टकासुच ॥ पितृमुख्येनकर्त्तव्यम् पार्वणानाश्च-

कारदत्तेर्य विधाप्रसिद्धिमुरहवटेयस्ते यमतीतिवदननिद्धितेतिनानग्निमत श्राद्ध
धिकारेप्रमाणमिति तदिदमनुपत्र नित्य नैमित्तिकेषुहि यथाशक्त्यास्तथाकुर्या
दितिन्यायात्सर्वांगोपहारा शक्तस्याप्यधिकारात् अगन्यभावेतुपाणौहोमविधानात्
अस्यविधानस्यचोक्तविषयविशेषव्यवस्थाया प्रमाणशून्यत्वात् सतिचाग्नौकरणर
हितानिश्राद्धानितेष्वधिकारानिहत्त च स्त्रीशूद्रानुपनीतानामपिश्राद्धोप देशात्साग्नि
कानग्निकोभयाधिकारेणविहितश्राद्धमितिसिद्धम् ॥

तुष्टयमिति। नन्वेवमन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्॥ पित्रादि मातमध्यन्त स्ततोमातामहान्तकमित्यादि वच नविहितम् नवदैवत्यम्विरुध्येत। मैवं। अन्वष्टकास्विति बहुत्वश्रुतिरप्येवमेव युक्ता अवसमानात् अग्निकर्तृकत्वदैवत्यमन्वष्टकास्वेन तद्वचनविहितमर्हति नापरपक्षनवमीविषयम्। अतोद्वादशदैवत्यमपरपक्षनवमीविषयमितिसिद्धम्॥ अन्यथा नवदैवत्ये मातॄणां पृथक्त्वेन मातामह्यादीनामपृथक्त्वे नार्द्धजरतीयापत्तेः। तथाच पुराणसमुच्चये। सर्वासामेवमातॄणां श्राद्धं कन्यागते रवौ॥ नवम्यान्तुप्रदातव्यम् अन्नमल्पमवरायतः। पितमातृकुलेनार्यो या.काश्चित्मृतास्त्रियः॥ श्राद्धार्हा मातरो ज्ञेया स्तासांश्राद्धम् प्रदापयेत्। इत्यौतुमातृपूर्वंहि श्राद्धङ्कुर्वीत बुद्धिमान्। अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत्॥ तामिस्रपक्षे नवमी यापुण्यातुनभस्यके। चत्वारःपार्वणाःकार्याः पितृपूर्वामनीषिभिः॥ पितॄणांतु त्रयः पिण्डा मातृपूर्वास्तथात्रयः। मातामहानामप्येवं त्रयोमातामहीषु च। एवंकुर्वन् ततः श्राद्धम् मातृणाञ्चनदोषभाक्॥ भवत्येवनरोविप्रा इति ब्रह्मपुराणमिति। कात्यायनोपि। नवानांनवकंदद्यौ तथैवाष्टकेविदुः॥ कुर्याद्द्वादशदैवत्यम् प्रेतेतीर्थेगयासु च। तथा उपप्लवेचन्द्रमसोरवेष्टद्दीगयायां गमनागमेषु। अन्वष्टकायांच महोत्सवेषु श्राद्धक्रियाद्वादशदैवतास्यात्॥ इतयाज्ञवल्क्योपि॥ गयायांच कुरुक्षेत्रे राहुग्रस्तेदिवाकरे॥ कुर्याद्द्वादशदैवत्यं पार्वणानां चतुष्टयमिति। ननु दिनानिदशपञ्चचेत्यत्र तिथिषोडशकप्रतिविरोधः। तथाच शाट्यायन.। नभस्यस्यापरेपक्षे तिथिषोडशकन्तुयत्।कन्यागताग्नि

तं चेत्स्या त्सकालःपितृकर्मसु । ब्रह्माण्डेपि । कन्यागते सवितरि यान्यहानितु षोडश । क्रतुभिस्तानितुल्यानि तेषुदत्तनथाक्षयं । कन्यागतएकदेशेपि । तथाच कार्ष्णाजिनिः । आदौमध्येवसानेवा यत्रकन्यांव्रजेद्रविः ॥ सपक्षःसकलः पूज्यो श्राद्धषोडशकंप्रतीति-चेत् । उच्यते । द्वादशकपालेष्वष्टाकपालवत् । षोडशदिनेषु पंच-दशदिनानुवाद इत्यविरोधः । श्राद्धषोडशकेतु सन्देहः । तत्र के शुक्लप्रतिपदोसह तिथिषोडशकमाहुः । तथाच देवलः । अहः षोडशकं यत्तु शुक्लप्रतिपदासह । चन्द्रक्षयाविशेषेण सापिद र्शात्मिकास्मृतेति । तत्र शुक्लप्रतिपदो दौहित्रकर्तृक मातामहश्राद्धविषयत्वात् । तथाच मातृणांनवमीयद्वतानांच चतुर्दशी तद्वन्मातामहानांच शुक्लेप्रतिपन्मतेति । अन्येतु तिथिवृद्धिविषयं । श्राद्धषोडशकमिति । तदपिन तथासति त्रुटिद्वयोः पंचदश सप्तदश श्राद्धसंभवा त्षोडशकविधिबाधापत्तेः । तथाचैवंपठन्ति । तिथयःपंचदशस्युः प्रेतपक्षेतुषोडश । अनुमत्यादिकंकुर्यात् पितृणां दत्तमक्षयं ॥ नातः पञ्चदशेकुर्यान् नातः सप्तदशेतथा । ऊनेतु नरकंयान्ति ह्याधिकेसग्राहनक्षय इति । तस्मात्त्रुटिद्वयोरभावे षोडशश्राद्धविधिरितिचेत् । तथासति श्राद्धषोडकस्य कदाचित्कर्तृत्वेन नित्यत्वानुपपत्तेः । अतः प्रौष्ठपदीमारभ्य वृद्धौप्रतिपदमभिव्याप्य दर्शावधिःकृत्य श्राद्धषोडशकं कर्त्तव्यमितिव्यवस्था युक्ता । एवंतर्हि प्रतिपदो दौहित्रविषयत्वमित्युक्ति विरुध्येत । तत्त्रुटिविषयत्वात् तयाषोडशपूर्णोपपत्तेः यद्वा एकाहे तिथिद्वयमंवस्थे श्राद्धद्वयकरणा त्षोडशपूरणम् । ततश्चोभयथापि प्रौष्ठपद्यामारभ्यः । तथाचमूलः ॥ पूर्णिमाप्रभृति श्राद्धम्

त्तस्मात्कुर्याद्विचक्षणः। दिनेदिने यज्ञफलं लभते श्राद्धदोनरः॥ ब्रह्मांडेपि॥ श्राद्धञ्च पूर्णिमायांचकृत्वापूर्व फलं लभेत्। प्रतिपद्धनलाभाय द्वितीयार्थायचापरे॥ पुराणसमुच्चयेपि। प्रशस्ता पौर्णिमा मुख्या तिथयः षोडशैवताः। यथातिलानांतैलञ्च तुल्यंवै प्रबतन्त्रकषायोः। पौर्णिमाया ममायाञ्च समम्पुण्यफलंद्वयोः। पूर्णपक्षे नभस्यस्यतिथिः पूर्णाप्रशस्यते। अस्यांदत्ते पितृणांवै तृप्तिः सांवत्सरीभवेत्। अमायांश्राद्धकृच्चैव सर्वान्कामानवाप्नुयात्। पूर्वापराह्णयोः रक्तेयः श्राद्धं कुरुतेनरः। नभस्यस्यद्विजश्रेष्ठाः पितरस्तेनपुत्रिणः। पौर्वाह्णिकी पौर्णमासीह्यमाचैवापराह्णिकीति। हृद्ययाञ्च वल्क्योपि। कामिकन्तिथिवार्तञ्च श्राद्धकर्मद्विजादिभिः। पूर्णिमाश्राद्धदानेन सम्पूर्ण फलमश्नुते। सर्वेन्त्वे प्रतिपच्छ्राद्ध मनमार्गीसमश्नुते। इत्यादिषोडशपाल। वायुपुराणे पि। पुष्टि प्रजां स्मृतिंमेधामित्याद्युपक्रम्य पौर्णमासरा द्यमावास्यांतं तिथिषोडशकमुक्तमित्यलं। ननु श्राद्धम् पिंडप्रदानं कर्मेति कथमुक्तं स्मृतिष्वनेकधाश्राद्धशब्दप्रयोगात् तथाहि। श्राद्धभुगष्टवर्जयेत्। श्राद्धभुक् प्रातरुत्थाय चपिस्यात् सकलेजराभोजयेत्सुयोगिन इत्यादिनाभोजने। श्रद्धास्ति यत्रतच्छ्राद्धम्। मन्त्राश्रद्धार्थो हृत्स्थोणः। श्रद्धयादीयते यस्मात्छ्राद्धन्तेन निगद्यतइति पाणिन्यादिवचनाच्छूद्धावीर्गे। लौकीपिण्डदानवनेच्छदद्यात्। नन्दायांभार्गवदिने त्रयोदश्यां त्रिजन्मनि तेषुश्राद्धंनकुर्वीतेत्यादि वचना त्पिण्डदानेवा। अथैतन्मनुः श्राद्धशब्दः कर्मप्रोवाचेत्यादिनाकर्मणि। एवंविप्रतिपत्तौ पिण्डदानस्य प्राधान्यात्तद्दानेशक्तनोर्द्दर्शोत्थानाच्च गयादौ पिंडदानंश्राद्धम्। ब्राह्मणपरीक्षायत्नाटमार्कण्डेय भोजने दोषश्रवणात् पिण्डदा

हित्वेपि श्राद्धसम्भवाच्च युगादौब्राह्मणभोजनमेवश्राद्धं दर्शादौतूभयसमुच्चयश्राद्धमित्येके तदन्येनक्षमते । अव्याप्त्यादि दोषपराहतेः श्रद्धयादीयत इत्यादावव्यापकत्वाच्च । तदपिन । तथासति हेतुकत्वसंभवे कल्पनागौरवकल्पेः । अथैतन्मनुः । श्राद्धशब्दःकर्मैतिस्मृतिवैयर्थ्यं । तथाचोक्तं । पुराणंमानवोधर्मः सांगोवेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि नहंतव्यानिहेतुभिरिति । तस्मात्सर्वत्रकर्मत्वाविशेषादाम्नायभेदेन कर्मव्यवस्थायक्ता । तथाच धर्मप्रदीपे यजुषां पिण्डदानन्तु वह्वृचांद्विजतर्पणम् । श्राद्धशब्दाभिधेयंस्यादुभयंसामवेदिनामिति । आपस्तंबोपि । श्राद्धशब्दः कर्मप्रोवाच पितरो देवता ब्राह्मणस्त्वाहवनीयार्थमिति । देवतोद्देशेनयथाहवनीयेहोमस्तथापितृउद्देशेन ब्राह्मणे दत्तंश्राद्धमित्यर्थः । ततश्च कर्मैवोपपन्नमिति । तथाच ब्रह्माण्डे । देशेकालेचपात्रेच श्रद्धयाविधानाचयत् । पितॄनुद्दिश्य विप्रेभ्योदत्तं श्राद्धमुदाहृतमिति । मरीचिरपि । प्रेतंपितॄंश्च उद्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यच्च तच्छ्राद्धं सप्रकीर्त्तितमिति । हृद्यासु वस्त्रोपि । पात्रं पत्नी विधिः श्रद्धा देशः कालः क्षमा दया । एतदेवोच्यतेश्राद्धं हविः कर्तृसमन्वितमिति । यदेकत्र पारिभाषिक मितरत्रौपचारिकम् । तथाच श्रीधरपद्धतौ । होमश्च पिंडदानंच तथाब्राह्मणभोजनम् । श्राद्धशब्दाभिधानंस्या देकस्मिन्नौपचारिकम् । प्रयोगाद्दृश्यतेलोके नियमस्तु त्रयेसतीति । प्राधान्यप्रयोजनं यदकरणेऽप्यावृत्तिः । प्रधानस्याक्रियायत्र सांगंतत्क्रियते पुनरितिवचनात् । यदुक्तं प्रतिपदि दौहित्रतृकर्तृकश्राद्धविषयत्वमिति । तन्नकिंजीवत्पि-

तृको दौहित्र: उत्तमृतपितृकइति उभयथाप्रतिक्रम: । तथाच । जातमात्रस्तुदौहित्रो विद्यमानेपि मातुले । कुर्य्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते । नन्वेवं त्रिपिण्डं षट्पिण्डं वा उच्यते । पित्रादित्रिके जीवति त्रिपिण्डं मृतेतूत्तरमिति । तथाचकात्यायन: । मातामहानांदातव्यं प्रतिपद्येवमुख्यकं । त्रिकंहित्वाम-यत्नेन श्राद्धंकुर्यात्सपिंडकम् । गौतमोपि । मातृपक्षे मृतानाञ्च देयंभक्त्या तु मुख्यकम् । सर्वेषां पावनं कुर्यात् यथाशक्त्यातु पिं-डद: । जातमात्रस्तु दौहित्रो विद्यमानेपु पार्वणम् । कुर्य्यान्मातामहश्राद्धं प्रतिपद्येवसर्वदेति । मृतपित्रादि त्रिकेतु गोभिल: । मातामहानां प्रतिपद्दौहित्र: स्वयमाचरेत् । तत्रपित्रे स्वयन्देयं विशेषात्प्रीतिरिष्यते । प्रतिपत्प्रतिपच्छ्राद्धं पित्रइति पितामहा-द्युपलक्षणम् । प्रत्यक्षपितरन्त्यक्त्वा ह्यन्यथातु ददातिय: । सयाति नरकं घोरं यावद्भूसागरानगा इति । मृते पित्रादित्रिके पितृ पङ्क्तिपरित्यागेन । प्रत्यवायजनकत्वात् । पञ्चमीपर्यन्तं श्राद्धका-लत्वाच्च । तथाच यम: । हंसे वर्षासुकन्यस्थे शाकेनापि गृहेव-सन् । पञ्चम्योरन्तरेदद्या दुभयोरपिपक्षयो: ॥ एकादशी चतुर्द-श्यादि तिथिश्राद्धानि क्षयाहश्राद्धानितूत्तरत्वप्रपञ्चयिष्यन्ते । बृह-त्त्वपरपक्षादि प्रपञ्चेनालम् । एवंपक्षश्राद्धमुक्त्वा पक्षान्तरमाह ॥

## * ऊर्ध्वं वा चतुर्थ्या: ॥ २ ॥

वाशब्दउत्तरोक्तप्राशस्त्यं सूचयन्स्मृत्यन्तरोक्तपक्षा न्द्योतयति । ततश्च शक्ततमेन शक्ततरेणशक्तेनचपूर्णिमांपञ्चमीमष्टमी मेका दशीमारभ्य शेषदिनेषु यथाक्रमं शक्त्याश्राद्धं कर्तव्यमित्यर्थ: । तथाच ब्राह्मे । अश्वयुक्कृष्णपक्षेतु श्राद्धङ्कुर्याद्दिने दिने ॥ लि-

भागहीनम्पचवा त्रिभागं त्वर्धमेववा विष्णुधर्मोत्तरेपि। उत्तराद-यनाच्छ्राद्धे श्रेष्ठंस्यादविशायनम । चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवेधिकम् । प्रौष्ठपद्यापरपक्ष तत्रादिवविशेषतः । तत्रैवंपक्ष सूर्ध्वं ततोप्यतीत्याष्टमूर्ध्वं ततोप्यतीत्यैकादशीमारभ्य श्राद्धं-*विदधता वाक्येन । कृष्णपक्षे दशम्यादि वर्जयित्वा चतुर्दशीमि-*ति । दशमीप्रभृतिश्राद्धविधायका मनुवाक्यम् विरुध्येत । पितुः शस्त्रहतत्वे दशमीप्रभृतित्रिभागत्वं पक्षस्येतरस्यैकादशीप्रभृतीत्य-विरोधः । अतएव प्रतिपत्प्रभृतिष्वेकांवर्जयित्वा चतुर्दशीमिति चतुर्दश्यांपार्वणनिषेधस्य त्रिभागादिपक्षेष्वेवपर्यवसानमित्यु-क्तम् । तिथिविषये पक्षान्तरमाह ।

## * यदहःसम्पद्येत तदहर्ब्राह्म णानामन्त्रयपूर्वेद्युर्वा॥ २ ॥

यदहरिति विभक्त्यर्थेऽव्ययीभावे । नपुंसकादन्यतरस्यामितिटज्-भाव. । क्षत्रियादिप्रतिषेधार्थम् ब्राह्मणानिति । पूर्वेद्युरिति नि-पातः । ततश्च यद्दिने मृताहसंज्ञकतिथिरपरपक्षे स्यात्तदहे पू-र्वोहिवा ब्राह्मणानामन्त्र्य श्राद्धं कुर्यादितिशेषः । पूर्वेद्युरसम्भवे तदहर्निमन्त्रयेदितिभावस्तदार्थं । तथाचकूर्मे श्वोभविष्यतिमेश्राद्धम्पू-*र्वेद्युरभिपूजयेत् । असम्भवे परेद्युर्वा यथोक्त लक्षणैर्युतान् ।* देवलोपि । श्वःकर्त्तास्मीति निश्चित्य दाताविप्रान्निमन्त्रयेत् । पक्षाभावेपरेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेदिति । अथवा वाशब्दो व्यवस्थायां । योपिप्रपङ्क्तिनः पूर्वेद्युरितरांस्तदहरित्यर्थः । तथाच मार्कण्डेयः । निमन्त्रयेतपूर्वेद्युः पूर्वोक्तांस्तुद्विजोत्तमान् ।

चमासौ तद्दिने वापि क्षिप्त्वायोपित्प्रसङ्गिनं । कात्यायनोपि। नविना ब्रह्मचर्येण ब्राह्मणः श्राद्धमर्हति। ब्रह्मचारी यतिश्चैव तद्दिनेच निमन्त्रयेदिति । दिनद्वयेपि निमन्त्रयेदिति समुच्चयार्थोवा। तथाचवृद्धयाज्ञवल्क्यः। चरणक्षालनादूर्ध्वं पुनर्विप्रनिमन्त्रणम्। आसनार्चनसंयुक्तम् सर्वस्व प्रतिपाद्यत इति। अर्वाचे। मदृशः सम्पद्यतेति सम्पत्यर्थवाचकत्वादादृशः यथोक्तद्दिनद्वयादि सामस्तदृश एवश्राद्धं नतुमृताहमिति। तन्न। तस्याजभायोगत्वेनानित्यत्वात् मृताङ्गीभाचनिकत्वात् सदाचरितत्वाच्च। नच संयतः पुरुषयत्नसाध्यत्वादन्यपरत्वस्ता। तस्मान्मृताह एवसर्वं सम्पाद्य श्राद्धं कर्तव्यमित्युक्तं । अतएवगोभिलसूत्रे यद्दहउपपद्येततेत्युपपन्नार्थमुक्तं । तथाच पुराणसमुच्चये। यातिथिर्यस्य मासस्य मृताहेतु प्रवर्त्तते। सातिथिः प्रेतपक्षस्य पूजनीयाप्रयत्नतः। तिथिच्छेदोनकर्त्तव्यो विनाशौचं यदृच्छया। पिंडश्राद्धन्तु दातव्यं किञ्चिन्नैवकारयेदिति मृताहविषयस्यापि ऋष्यशृङ्गवचनस्यापि सदाचारेणसङ्कृतत्यात्तिथिविषयत्वमप्यविरुद्धं । एतच्च पुत्रभ्रातृपत्न्यादिव्यतिरिक्तविषयं। तेषा मेकादशी द्वादश्योः श्राद्धविधानात्। तथाच वायुपुराणे संन्यासिनोप्याब्दिकादि पुत्रं कुर्याद्यथातिथिः। महालयेतु यच्छ्राद्धं द्वादश्यां पार्वणेनत्विति। पिण्डश्राद्धंच दातव्यमिति निषिद्धदिनेपीत्यर्थ. तथाचकात्यायनः। अशक्तः पक्षमध्ये तु करोत्येकदिनेयदि। निषिद्धे पि दिने कुर्यात् पिण्डदानं यथाविधिरिति। नन्वेवं पौर्णमास्यां मृतस्य कुलतिथाविति। तत्रामावास्यायामित्येके। तन्न। तिथ्याश्रयाभावात्॥ दर्शमृतस्यैव तद्योचितत्वाच्च। अतोभाद्रपद्यामेवयुक्तं तथाच वृद्धया-

ज्ञवल्क्य: । पूर्णिमायाममायांवा मघाकन्यागतेरवौ । एकोद्दि-
ष्टं तु मातुःस्या त्पितुःपार्वणमुच्यते । नान्यकाले प्रशंसंति चये-
ह्नितु पार्वणमिति पूर्णिमादर्शयोर्मृतस्य कन्यागतेरवौ तयो. ।
चयाहसंज्ञकतिथित्वात् प्रौष्ठपद्यामपरपचे च दर्शे च पार्वणंक-
र्त्तव्यमित्यर्थ: । तथाच प्रौष्ठपद्याममायांच कन्याप्राप्ते रवौस-
दा । सर्वस्त्रेनापि कर्त्तव्यं श्राद्धं वा इन्दुलोचनइति । एकोद्दि-
ष्टन्तु मातुःस्यादित्यैव मुपरिष्टाद्वच्यामइत्युक्तम् । अत्रकेचिद्दैवपूर्वं
निमंत्रयेदिति । तन्न । पितृपूर्वस्य विहितत्वात् । (१) तथाच देवल: ।
श्व:कर्त्तास्मीति निश्चित्य दातात्रिमान्निमंत्रयेत् । कृतापसव्यं
पूर्वेद्युः पितृपूर्वंनिमन्त्रयेत् । प्रचेताअपि । कृतापसव्यः पूर्वेद्युः
पितृपूर्वंनिमन्त्रयेदिति स्मृत्यन्तरेपि प्रार्थयीतप्रदोषांते भुक्तान-
शयितान्द्विजान् । अयुग्मानपसव्येन पितृपूर्वंनिमंत्रयेदिति यत्तु
बृहस्पतिवचनं । उपवीतीततोभूत्वा देवतार्थं द्विजोत्तमान् ।
अपसव्येनपित्र्ये च स्वयंशिष्योथवासुत इति । तत्पूर्वं पश्चाद्वावयो
रश्रवणादस्मिन्नेव क्रमेयोज्यमित्यविरोध: । एतच्च पूर्वेद्युर्निमं-
त्रणं गृहलेपाद्युपलचणं । तथाच वाराहे । वस्त्रशौचादि कर्त्त-
व्यं श्व:कर्त्तास्मीतिजानता । स्थानोपलेपनंभूमे: कृत्वाविप्रान्नि-
मंत्रयेदित्यादि । एवं निमंत्र्य ब्राह्मणानाह ॥

## * स्नातकान् ॥ ४ ॥

स्नातकास्त्रिविधास्तान्निमंत्रये दितिशेष: । तथाचयम: ।
विद्याव्रतोभयस्नातो ब्राह्मण:पंक्तिपावनइति । अथचापत्नीक-
निमंत्रणप्रातिषेधप्रसंग: विभार्यद्विजपतिरित्यादिनानिषेधात् ।

## * एकेयतीन् ॥ ५ ॥

निमंत्रयेयुः नकात्यायनादयइतिविकल्प: ॥ तथाच वायवीये ।

(१) वस्तुतस्तु पितृपूर्वन्निमन्त्रणन्त्वन्यशाखाविषयम् दैवपूर्वं ठं० श्राद्धमिति वच्यमाणत्वात् ॥

गृहस्थानांसहस्रेण वानप्रस्थशतेनच। ब्रह्मचारीसहस्रेण एकोयोगीविशिष्यते। विष्णुरपि। अपिनःस्वकुलेजायाद्योजयेदास्तुयोगिनः। विप्रान्छ्राद्धे प्रयत्नेन तेनतृप्यामहेवयमिति। इतरेकात्यायनाद्योनेताहुः। तथाच गृह्यसंग्रहः॥ आचार्यानुमतंवाक्यमेकीयंदृश्यतेक्वचित्। शेषाणयेकीयवाद्य नि आचार्योनप्रशंसति। वसिष्ठोपि। श्रुतिस्मृतीअतिक्रम्य यंसमश्नातिमूढधीः। नतंदु। ब्राह्मणंप्राहुः श्राद्धार्थमुपवेशयेत्॥ योदद्यादन्नमस्माकं तत्सर्वंमधुनासह॥ आमिषेणसमायुक्तं गस्तानांमृगपक्षिणां। जातूकर्ण्यः। दारवान्योद्विजःश्राद्धे दद्यान्नोमांसमध्वरे सदुरात्मा दुराचार्यो वेदमार्गस्यदूषकः। तर्पणंतिलहीनंच श्राद्धंयच्च-निरामिषं। विनादर्भैश्चयामंध्या लयंशशविषाणवत्। यत्र मातुलजोद्दाही यत्रवाहपत्नीपतिः। श्राद्धंधिनोतितत्यज्यता स्मृतं यच्चनिरामिषं। विश्वामित्रः। निमंत्रितस्तुयःश्राद्धे यज्ञे वापि-द्विजाधमः। मांसंनाश्नातिनिरयं यातिरोमप्रमितांनरः। इत्यादौगवाधया यतिपक्षः कात्यायनेन निरस्तइत्येकेइत्ययुक्तम्। त्रिदण्डिनामेवविहितत्वात्। तथाचवायौ। सन्तिवेदविरोधेन केचिद्विज्ञानमानिनः। अयज्ञयतयोनाम वेदसंतियथारजः। मुण्डान् जटिलकषायान् श्राद्धेयत्नेनवर्जयेत्। ब्रह्मांडेपि। एभिर्निर्धूतदृष्टस्तु श्राद्धंगच्छतिदानवान्। शिखिभ्योधातुरक्तेभ्य स्त्रिदण्डिभ्यः प्रदापयेदिति। मुण्डोविशिखः। जटिलोभस्मांगः। श्रुतिरपि। अशुचिर्वा एषयन्मुण्डस्तस्तत्तदपिधानंयच्छिखेति। उ-भावप्यज्ञातकुलशीलत्वा न्ननिमंत्रयेदित्यन्ये। तथाचकात्यायनः।य स्यशीलंनजानीयात् स्थानंविपुलर्षकुलम्॥ कन्यादानेतथाश्राद्धे नहणीयात्कदाचन। मनुः। नस्वगोत्रेहविर्दद्या त्समानप्रवरे-

तथा । नाविज्ञातकुलैचैव यथाकन्यातथाद्दविः । पुराणसमुच्चयेपि । येषांनज्ञायतेस्थानं नष्टस्थानाश्चयेद्विजाः । नज्ञातिर्ज्ञायतेयेषां नसंबंधीनबांधवः ॥ कुधर्माचरणायेतु नतांश्राद्धे निवेशयेदिति । तदपिन । विज्ञातकुलशीलादीनां विधानोपपत्ते मांस मधु दक्षिणास्नानपंक्तिभेदादिदोषोपपत्तेः । तस्मादुभयोरप्यातिथि-रूपेणभोज्यत्वं नपंक्तौनिवेशइतियुक्तं।तथाचवाराहे। वैश्वदेवेनि युञ्जीत ब्रह्मचारिंशुचिंसदा । भिक्षुकान्देवतार्थेषु पूजयेदतिथिं यथा । अतिथ्यादिव्रत्तौ छागलेयोपि । गंधमाल्यैः फलैश्चैव भोजनैःक्षीरसंस्कृतैः । पूजयेदतिथिंश्राद्धे पितॄणांतुष्टिकारकं । ब्रह्मचारीयतिश्चैव पूजनीयोह्निनित्यशः । तत्कृतंसुकृतंयत्स्या स-स्यषड्भागमाप्नुयात् । मार्कंडेयोपि । भिक्षार्थमागतान्वापि । कालेसंयमिनोयतीन् । भोजयेत्प्रणिपाताद्यैः प्रसादोद्यतमानसः । कल्पतरावपि । पूजयेच्छ्राद्धकालेपि यतिंसब्रह्मचारिणं । गच्छं तिपितरोदेवाः सचयातिपरांगतिम् । तारयंतिचदातारं पुत्रान्दा रान्पितॄंस्तथा । तस्मात्सर्वप्रयत्नेन पूजयेदाश्रमागतं । अत्रा भिध्यानभिक्षूणांपूजयेत् ब्रह्मचारिणं ॥ तदलाभेप्युदासीनं गृ हस्थमपिभोजयेत् । विश्वामित्रोपि । यतिर्वाब्रह्मचारीवा भुक्त्वा तानांद्विजन्मनो । श्राद्धेयत्रभवेत्साक्षी महालयसमंहितत् । महालयेगयायांच यतिधर्मंव्रविः । पित्रर्थकल्पितंपूर्वं मन्त्रदेवा दिकारणात् । वर्जयेत्तादृशीभिक्षां परबाधाकरीं तथा । यमो पि । भिक्षुर्कोब्रह्मचारीवा भोजनार्थमुपस्थितः । उपविष्टेषुप्राप्तः काममपिभोजयेदित्येवमादिवचनपर्यालोचनया यतीनांमाक्षि त्वयोरेवप्राप्तिर्नपङ्क्तौनिवेशइति । तथाचस्मृतिः । भुक्तशेषं नभु ञ्जीत पीतशेषं नसंपिबेत् । नचैवोपविशेत्पङ्क्तौ यतिर्वातापसस्य

वेति । यतिस्तुसर्वविप्राणां सर्वेषामग्रभुग्भवेदिति । वायुपुरा-णोक्तेः । किन्तु यदिपंक्तयुपवेशःस्या त्तदाद्विजेभ्योमांसादिदाने न तेषांतदभावे पङ्क्तिवैषम्यान्नयुक्तम् । नपङ्क्तौविषमंदद्यादिति वाक्यात् । वृद्धहारीतोपि । पंक्तिभेदी वृथापाकी नरकंप्रतिपद्य-ते । कामांल्लोभाद्भयाद्वापि यःपङ्क्तिन्दूषयेत्द्विजः । नरकाद्व तीर्णस्तु जायते ग्रामसूकरइति । अपिच । दक्षिणायामपिवै पर्य्यं । तथाचविश्वामित्रः । हेमंवारजतंवापि यतयेब्रह्मचारिणे । योददातिकृतेवस्त्वं सभवेद्ब्रह्मघातकइति । अतएकइत्युक्तं त-त्सूत्रम् यद्वैकग्रहणं व्यवस्थितविकल्पार्थं दैवश्राद्धे यतयः पित्र्ये गृ-हस्थाइति । तथाचवृद्धवशिष्ठः । चत्वारः आश्रमापूज्या दैवश्राद्धे-नसर्वदा ॥ चतुराश्रमबाह्येभ्यः श्राद्धं नैवप्रदापयेत् । मार्कण्डे-योपि । ब्राह्मणानांसहस्रेभ्यो योगित्वग्रासनोयदि ॥ यजमानञ्च-भोक्तॄंश्च नौरिवांभसितारयेत् । यमोपि । न ब्राह्मणम्परीक्षेत दैवेकर्मणिसर्वदा । पित्र्ये कर्मणिसंप्राप्ते परीक्षेतप्रयत्नतः । वैश्वदेवे नियुञ्जीतेति वाराहवाक्याच्चेत्यलंबहुना ।

## * गृहस्थान्साधून्वा ॥ ६ ॥

वाशब्दः पाक्षिक यतिनिमंत्रणनिषेधार्थः । तथाचजाबालः । अग्नौतियेनमांसानि भार्याहीनाश्चयेद्विजाः ॥ येचमातुलसंबंधा नताञ्छ्राद्धे निवेशयेत् । स्कन्दपुराणेपि । नाश्नातियोद्विजोमांसं य-स्तनोदार संग्रहः तावितौमुनिभिः प्रोक्ता वनर्होमखदूषकाविति । ननु । वाशब्दःगृहस्थनिषेधार्थःकिंनस्यात् । मैवं साधुशब्देनैवत-न्निषेधसिद्धेः । नचात्रवाशब्दाभावशङ्कः । शाखांतरेदृश्यमान-त्वात् ॥ तथाचगोभिलः । गृहस्थान्साधून्वेति । वसिष्ठोपि । य-

तीन्गृहस्थान्साधून्वेति । अतश्चगृहं पत्नी तत्सहितागृहस्था-न्नरान्निमन्त्रयेदित्यर्थः । नचविभार्यनिमन्त्रणमनुज्ञातं ॥ विभा-र्याद्वषलीपतिरित्यविशाप्रतिषेधात् । साधूनाह्वादित्यपुराणे । साधून्वच्यामिसांयतमित्युपक्रम्यगङ्गायमुनयोर्मध्ये मध्यदेशः प्र-कीर्त्तितः । तत्रोत्पन्नाद्विजायेवैसाधवस्तेप्रशस्यतइति । यद्वादेश-व्यतिरिक्तदेशस्थाः सदृशाः म्लेच्छदेशनिवासिनो वर्जयेदिति-मात्स्योक्तेः ।

## * श्रोत्रियान् ॥ ७ ॥

निमन्त्रयेदितिशेषः । श्रोत्रियमाह्देवलः । एकशाखाचस-कलां षड्भिरङ्गैरधीत्यच । षट्कर्मनिरतोविप्रः श्रोत्रियोनाम-धर्मवित् । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्यया यातिविप्रत्वन्त्रिभिः श्रोत्रियउच्यतइतिवा ।

## * वृद्धाननवद्यान् ॥ ८ ॥

विकलेन्द्रियदुराचारादि दोषराहित्यमनवद्यशब्देनोच्यते । ततश्चायः सर्वेषुवेदेषुश्रोत्रियो ब्रह्मविद्युवेति युवत्वेन द्दृष्ट-निषेधेद्दृद्धानिति प्रतिप्रसवः । यद्वायुवत्वविधिभ्यान्तद्व्यति रिक्तबाल्यवयस्कस्य भोक्तृनियमात्त्वमस्यनिषेधः । अनवद्यपद मुत्तरत्रानुषज्यस्वकर्मस्थद्विजविशेषणं कृत्वा केवलवृद्धशब्देनज्ञान-वयस्तपोवृद्धांस्त्रिविधानितिहलायुधः ।

## * स्वकर्मस्थान् ॥ ९ ॥

स्वजात्युक्तकर्मानुष्ठानरतान्विप्रानित्यर्थः । अतश्चश्रोत्रिया-द्विलक्षणमनेनोक्तमित्यपुनरुक्तिः । तथाचपुराणसमुच्चये । गृहस्थाः कुलसम्पन्नाः प्रख्यातकुलगोत्रतः । स्वाचारनिरताः शान्ताः

विज्ञेयाः पङ्क्तिपावनाइति। मुख्यकल्पंप्रदर्श्यानुकल्पमाह ।

*** अभावेपिशिष्यान्स्वाचारान् ॥ १०॥**

अपिशब्दः स्मृत्यंतरोक्तानुकल्पसमुच्चयेन तत्रपूर्वोक्तमुख्यकल्पाभावेसद्वृत्तान् शिष्यादीनपिनिमन्त्रयेदित्यर्थः। तथा-चयाज्ञवल्क्यः॥ स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः। त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाइति। अनुकल्पस्त्वयंज्ञेयः सदासद्भिरनुष्ठितः। मातामहंमातुलञ्च स्वस्रीयंश्वशुरंगुरुं। दौहित्रंविट्पतिंबंधुमृत्विग्याज्यौचभोजयेदिति-मनुः। आपस्तंबोपि। गुणवदलाभेसोदर्योप्यमावन्तेवासिनो-स्यातादिति। अयमनुकल्पोदैवएवनपित्र्ये। तथाचात्रिः। पिता-पितामहोभ्राताशिष्योवाथसपिंडकः। नपरस्परमर्घ्याः स्युर्नश्राद्धेऋत्विजस्तथा॥ ऋत्विक्पुत्रादयोह्येतेसकुल्याब्राह्मणाः॥ द्विजाःवैश्वदेवेनियोक्तव्यायदेतेगुणवत्तराइति। अपिभिन्नक्रमइतिहलायुधः। स्वाचारानित्यमेनाचार्यधनहारित्वाभावउक्तः। तेहिकदाचिद्धन-हारिणोविहिताःदद्यात्पिंडंहरेद्धनमित्यादिना। अतस्तथात्वेशिष्यदौहित्रादयोनाभिमन्त्रणीयाःपिंडदोंशहरइतिपिंडदातृत्वहर-सम्भवात्। वर्ज्यानाह।

*** द्विर्नग्नशुक्लविक्लिधःश्यावदन्तविद्धप्रजन-नव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जम्॥११॥**

द्विरितिपित्रोर्वंशेत्रिपुरुषंवेदाग्न्योर्विच्छेदोद्विर्नग्नः। तथा-चसुमंतुः। यस्यत्रिपुरुषादासीदुभयोर्गोत्रयोरपि। वेदस्याग्ने-श्चविच्छेदोद्विर्नग्नःप्रकीर्तितः। इत्यमैतिच। शुक्लोतिकपिलांग-

केशः । तथाचकात्यायनः ॥ द्विर्नग्नः किलदुश्चर्माशुक्लोतिकपिलःस्मृतः । विचर्चिकादिरुग्दोषीविक्लिधःपरिकीर्तितः मङ्गहकारेपि । खल्वाटकश्चदुर्वालः कपिलाश्चंडएवचेति । विक्लिधश्चोष्ठ। भग्नमनाष्टतदन्तः । तथाच । उच्चनैवाधरोष्ठाभ्यांछादग्नतेदशनावली । विक्लिधःसतुविज्ञेयोब्राह्मणः पंक्तिदूषकः पूतिगन्धघ्राणइतिकश्चित् । श्यावदन्तः । स्वभावात्कपिलदन्तः । विद्वप्रजननः छिन्नलिंगचर्मादृश्विणात्येप्रसिद्ध. । तथाच कल्पलतायां। विद्धप्रजननश्चैव क्षतांशश्चविकारवान् । तं हि कामार्धभोगार्थं दक्षिणात्याःप्रकुर्वते । वन्ध्यवीजीवा । मृतापत्यइत्यन्ये । व्याधितोरोगी महारोगोपलक्ष्ट इतिकश्चित् । व्यङ्गी विगतस्विविधंवांगंयस्यैतिसमस्य । हीनांगोधिकांगश्च । हीनातिरिक्तांगइतिस्मृतेः । श्वित्री । श्वेतकुष्ठी । कुष्ठीकुत्सितगलितांगः । व्याधितग्रहणादेवतन्निषेधेसिद्धे तद्ग्रहणंदोषाधिक्य द्योतनार्थं । अजीर्णादिस्वल्परोगिदोषाल्पत्वज्ञापनार्थञ्च ।कुनखी स्वभावात्कुत्सितनखो । एतान्वर्जयित्वा निमंत्रयेदित्यर्थः । अत्रस्नातकादि विहितग्रहणादेवतत्रनिषेधेसिद्धे द्विर्नग्नादिनिषेधो मुन्यन्तरोक्तआंतरालिकादिज्ञोपवेशनार्थः । तेचग्रंथगौरवान्नेहलिखिताः । अन्यथाद्विर्नग्नादि वर्जनमनर्थकंस्यात् ।

## ॥ अनिन्द्योनामंत्रितोनापक्रामेत् ॥१२॥

अनिन्द्योनिर्दोषस्तेनामन्त्रितोनश्यातिक्रमेत् । तथाचश्रुतिः । (१) सहोवाचाग्निं द्वाविमा उपतपसोनिन्द्यौ इत्यानशकमपक्रमितुमिति तस्मादुहानिंद्यस्य इतोनापक्रामेदिति ।आग्निवेश्योपि ।नैकदापि परान्नं यो भुङ्क्ते मूढमतिर्द्विजः ॥ वत्सराभ्यन्तरे वत्सरंभवेदिति । निर्दोषस्येतिशेषः ।

(१) अग्निष्टोमप्रकरणेऽध्वरकाडे

## *आमन्त्रितोवान्यदन्नंप्रतिगृह्णीयात्॥१३॥

निमन्त्रितोविप्रोऽन्यदन्नं सिद्धमामंवा परस्मानगृह्णीयादित्यर्थः॥ यद्वान्यस्यान्नमन्यदन्नम् अन्यस्य दगागमश्छान्दसः। वाशब्दो निमन्त्रिते दातृभोक्त्रोः परस्परत्यागनिषेधन्द्योतयति। तथाच यमः। आमन्त्रितश्चयोविप्रो भोक्तुमन्यत्त्रगच्छति। नरकाणांशतंगत्वा चाण्डालेष्वभिजायते। केतनं कारयित्वातु निवारयतिदुर्मतिः। ब्रह्महत्यामवाप्नोति शूद्रयोनौचजायते। आदित्यपुराणे आमंत्रितश्चिरंनैव कुर्याद्विप्रःकदाचन॥ देवतानांपितॄणांच दातुरन्नस्यचैवहि चिरकारीभवेद्रोगी पच्यतेनरकाग्निनेति॥

## * स्नातांश्शुचीनाचांतान्॥ १४॥

ईदृगानुपवेश्य। श्राद्धं कुर्वीतेति वक्ष्यमाणेनसंबन्धः। स्नानशौचाचमनानि स्मृतिप्राप्तान्येवात्रसार्थकत्वेनानुवदति। तेनस्नानशौचाचमनेष्वत्रविशिष्टविधिरित्यर्थः। तथाच देवलः। ततोनिवृत्तेमध्यान्हे कृतलोमनखान्द्विजान्। अभिगम्ययथापूर्वं प्रयच्छेद्दन्तधावनम्। तैलमुद्वर्त्तनं स्नानं स्नानीयंचपृथग्विधम्। पात्रे (१) उदुम्बरेदद्या द्वैश्वदेवस्यपूर्वकम्। ततः स्नात्वानिवृत्तेभ्यः प्रत्युत्थायकृतांजलिः। पाद्यमाचमनीयंच संप्रयच्छेद्यथाक्रममिति। अत्रामन्त्रितानांस्निग्ध स्नान दन्तधावन निषिन्नं कर्तुं। तथाच। दन्तधावनतांबूलम् स्निग्धस्नानमभोजनम्। रत्यौषधंपरान्नानि श्राद्धकृत्सप्तवर्जयेदिति। अत्रकेचिदनिषिद्धविधिविषयन्तैलादिप्रेषणमिति। तन्न। श्राद्धीयेन्हि विशिष्टविधित्वात्। तथाच कात्यायनः। तैलमुद्वर्तनन्देयम ब्राह्मणेभ्यः प्रयत्नतः। तैरभ्यङ्गःप्रकर्त्तव्यो वर्ज्यंकालान्नचिन्तयेत्। अभ्यङ्गो-

(१) ताम्रपात्रे

सुरेश्वरोपि। पुत्रजन्मनिसंक्रान्तौ श्राद्धे जन्मदिनेतथा नित्यस्ना नेच कर्तव्यो तिथिदोषोनविद्यतइति। निषेधस्यमलापकर्षविषयत्वा च। एवंज्वरादिव्याधौ रजस्वलादौच सत्यशुद्धत्वाच्छुचौनितिशे-षः। तथाचपुराणसमुच्चये। कृत्वातुरुधिरस्रावान्नविद्वान् श्राद्धमा-चरेत्। एकाहं हि शोणितवाविद्वान्दिनानिपरिवर्जयेत्। वमनेवाविरे-केवातद्दिनं परिवर्जयेत्॥ यथारजस्वलानारी ह्यशुचिस्त्रिदि-नम्भवेत्। रक्तस्र.वेतथानृणा मशुचित्वंप्रजायतइति एवमाचम-नेपि विशेषः। तथाच विष्णुपुराणे। उपस्पर्शस्तुकर्तव्यो मण्डल-स्योत्तरेदिशि। कर्त्तःव्यंराद्विजैर्थापि विधिवद्वाम्यतैःसदा। मण्ड-लस्योत्तरेदेशे कुर्यादाचमनंद्विजः। सोमपानफलम्प्राहुर्गर्गकाश्यप-गौतमाः। आपस्तंबोपि। कुर्यादाचमनं विप्राः उदीच्यांमण्डलाद्ब-हिः। अन्यदिक्षुयदाकुर्यान्निराशाः पितरोगताइति। तथा। विप्रपादोदकस्थानेकुर्यादाचमनंद्विजः। रुधिरंस्रवतेतोयन्नि-राशाः पितरोगताः। पादोदकोच्छिष्टवारिद्वयोर्यत्रसङ्गतिर्भवेत्। उच्छिष्टाः पितरोयान्तिशुध्यन्तिच गयाशिरइति। मण्डलादि-करणङ्गोमूत्रेणाहस्मृतिः। गोमूत्रमंडलंकृत्वादक्षिणेचोत्तरेउभे। श्राद्धीयाहनिसंप्राप्तेरेणुभिर्नजलेनच। गृहकुड्यादिलिपेषुगोमूत्रं रेणुरुच्यत इति॥

**मू० प्राङ्मुखानुपवेश्यदैवेयुग्मानयुग्मा-न्यथाशक्तिपित्र्यएकैकस्योदङ्मुखान्॥१५॥**

यथाशक्त्येकैकस्येति पदंउभयत्रसम्बध्यते। युग्माद्विचतुरादयः। अयुग्मात्रिपञ्चादयः। ततश्चैकैकस्यपित्रादेर्दैवश्राद्धे यथाशक्तियुग्मान्प्राङ्मुखान्। पित्र्येप्येकैकस्यपित्रादेरयुग्मान्यथाश-

त्र्युदङ्मुखान्विप्रान्वामकरेणासनंस्पृष्ट्वादक्षिणकरेणद्विजकरं धृ-
त्वा ॐभूर्भुवःस्वः इदमासनमास्यतामित्युक्त्वोपवेश्यश्राद्धं कुर्यादि-
तिशेषः। तथाचकात्यायनः। सव्येनैवासनं धृत्वादक्षिणेदक्षि-
णं करं। ॐभूर्भुवः स्वरित्युक्त्वाआसनेपूपवेशयेदिति। एवञ्चत्र-
प्रतिपुरुषं दैवश्राद्धं भवतीतिचगम्यते। यथाशक्त्यैत्यस्यानियतवा-
चकत्वात्। अयुग्मत्वंच नवभ्योर्वावेद्यं। नवावरान्भोजयेदयु-
जोयथोत्साहंवेति। ब्रह्माण्डेऽपि सामर्थ्येऽपिनवभ्योऽधीन्भोजयीत-
सतिद्विजान्। नोर्ध्वं कर्त्तव्यमित्याहुः केचिद्दोषस्यदर्शनादिति।
एवंबहुतराप्राप्तौसंख्यामाह॥

## * द्वौवादैवेत्रीन्पित्र्ये ॥ १६ ॥

वाशब्दः प्रतिपुरुषंदैवश्राद्धं निषेध्यदैवेद्वौपित्र्येत्रीनितिपितृ-
पक्षौ दैवेद्वावेवपित्र्ये प्रतिपुरुषंत्रिकत्रिकभेदेनवा। एवमुभयत्राप्ये
श्राद्धैवेत्यर्थः।अतएवप्रतिपक्षौदैवश्राद्धंनप्रतिपुरुषमितिपूर्वसूत्रा-
पवादः। तथाचबृहद्याज्ञवल्क्यः। दशै कंपंचवाविप्रापार्वणेविनि-
योजयेत्। द्वौदैवेप्रागुदक्पित्र्ये एकैकदशपंचवेति।। पक्षद्वया-
वधारणार्थोवाशब्दः। विस्तरनिषेधात्। तथाचसएवद्वौदैवेपितृ-
कृत्ये त्रीन्पंचचैवंप्रकल्पयेदिति। मनुरपि सत्क्रियान्देशकालौच-
द्रव्यब्राह्मणसंपदः। पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरं। बृ-
हस्पतिरपि। एकैकमथवाद्वौत्रीन्दैवेपित्र्येचभोजयेत्। सत्क्रि-
याकालपात्रादिनैसंपद्येतविस्तरं। ब्राह्मेपि। यस्माद्ब्राह्मणबा-
हुल्याद्दोषोबहुतरोभवेत्। श्राद्धनाशोमौननाशः श्राद्धतन्त्रस्यवि-
स्मृतिः। उच्छिष्टोच्छिष्टसंसर्गोनिन्दादातृषुभोक्तृषु। वितंडावा-
पवादोवाजल्पन्त्वेतेपृथग्विधा ॥ * ॥ * ॥

## मु० एकैकमुभयत्र वा ॥ १७ ॥

वाशब्दोऽभावे। सततप्रदेशकालधनाद्यभावेदैवे पित्र्ये चैकैकं ब्रा ह्मणद्वयमेवोपवेशयेदित्यर्थः। तथाचष्ट्रद्धयाज्ञवल्क्यः। एकंदैवेतथा- पित्र्येधनविभाद्यभावतः। योजयेत्श्राद्धदामेवमितप्रश्नंनलोपयेदि- ति। नन्वेवंतत्रैवैकंसर्वेषामितिनिषेधोनुपपन्नः। मैवं। तस्य सं- भवविषयत्वात्। तथाच। ब्राह्मणाविप्रसंपन्नावेकैकत्रत्रयस्त्रयः। एकोवैकस्यभोक्तात्र्यस्त्रयाणामेकएववेति।अत्रदैवेपित्र्ये चेत्यनुष्टत्तौउ भयत्रे तिग्रहणंसर्वत्रविभागार्थं। समंस्यादश्रुतत्वादितिन्यायात् ॥

## मु० मातामहानांचैवम् ॥ १८ ॥

मातामहानामप्येवं सर्वे पद्मभवेयुरित्यर्थः। अतएवमाता- महश्राद्धमपिपितृश्राद्धवन्नित्यमित्युक्तम्। मातामहादिभिर्मातृः सापिंड्यएवमातामहश्राद्धनित्यमितिविज्ञानेश्वरः। अतएवातिदे- शान्नपृथक्कार्यमित्यन्ये। तदेतत्कर्कादिभिरनाहृतमित्युपेक्षितं। तथाचस्कन्दपुराणे। पार्वणंकुरुतेयस्तुकेवलंपितृहेतुतः मातामः- ह्यंनकुरुतेपितृहाचोपजायते। चकारोनवद्वाद्शदैवत्ये मातृमाता मह्योरतिदेशार्थः। वैश्वदेवेविशेषमाह॥

## मु० तत्वावैश्वदैविकम् ॥ १९ ॥

विश्वेदेवाः मंत्यनेनेतिवैश्वदेविकं। श्राद्धंतंत्रमुभयपक्षयोरेक दैवंभवेदितिशेषः। अत्रद्वनिष्ठनीसाधारणंभवेत्तंत्रमितियच नात्। पयस्त्वपघोन्यदपेयुविकल्पते। ततश्चैकप्रयोगपृथंसाधक- त्वं भिन्नप्रयोगापूर्वसाधकत्वंश्चवैदपदैवश्राद्धस्यभवतीत्यर्थः। एत- त्कामिवमसपूर्वादित्याभिमन्तयेत्। तथाचकात्यायनः॥ कृष्णादमंव

सुक्तेनकुर्यात्तोयाभिसंभवम्। अन्नानिशोधयेत्तो नरोनेनश्राद्धगाध-रेदिति। कूष्माण्डमन्त्रा (१) यद्देवादेवेत्यादयस्त्रयः॥

## * श्रद्धान्वितःश्राद्धंकुर्व्वीत ॥ २०॥

श्रद्धाधर्मकार्येषुसफलत्वनिश्चयः। तथाचमनुः। प्रत्ययोधर्मकार्येषु सद्भिःश्रद्धेत्युदाहृतेति। साचस्मृत्युक्तधर्मोपलक्षणं। अतस्तद्युक्तःश्राद्धकुर्वीतेत्यर्थः।तथाचविधिहीनमनुष्ठानमन्त्रहीनमदक्षिणमश्रद्धयाकृतं दत्तंतद्दै रक्षांसिभुञ्जते। तथा।विभक्तिभिस्तुयत्किंचिद्दीयतेपितृ दैवते। तत्सर्वंसफलंश्राद्धेविपरीतंनिरर्थकमिति। अत्रश्रद्धास्ति अवतश्राद्धमितिश्राद्धग्रहणेनैवतदन्वितत्वेलब्धे श्रद्धान्वितग्रहणंपितृकार्येषुस्मृत्युक्तधर्मादरज्ञापनार्थं। तथाचमनुः। देवकार्याद्द्विजातीनां पितृकार्यंविशिष्यतइति। अतःपितृकार्येस्मृत्युक्तधर्मादरेणप्रयोगकुशलःस्यादिति। एतदुक्तंभवति संबन्धनामगोत्ररूपाणांयथावत्प्रयोगेणपुत्रादिदत्तं हविः पितॄणांतृप्तिकरंभवतीति। तथाच। नामगोत्रं स्वधर्मप्रापकं हव्यकव्ययोरिति। प्रातिश्रैष्ठ्यमवाप्नोति प्रयोग कुशलोनरइतिच। नामादिप्रयोगोधर्मप्रदीपे। आवाहनार्घसंकल्पे पिंडदानेतिलोदके। अक्षय्यासनयोः पादेनामगोत्रे प्रकाशयेत्। अत्रचिंत्यते। संबन्धादिक्रमोस्तिनवेति। केचित्तु संबन्धादीनांहविः प्रापकत्वमेवनोच्चारक्रमइति। अन्येत्वनुक्तगोत्राद्यन्वितरसुकर्मशर्मेति क्रमइति। वसुरुद्रादीध्यानमेवनोच्चारणंचर्चके। तवनाद्यः। स्मृत्युक्तक्रमवैयर्थ्यात्। नद्वितीयःगोत्रप्रयोगस्यादावविहितत्वात्। नतृतीयः। वसाद्युच्चारस्यैवोक्तत्वात्। तथाच। संबन्धमग्रधवम्प्रया न्नामगोत्रेततःपरम्। रूपन्ततोविजानीया देषधर्मःसनातनः। अन्यत्र।

(१) २० अध्याये।१४।१५।१६। मन्त्रा।

न्मनामसमुच्चार्य तस्यगोत्रमुदीरयेत्। इत्यस्यान्तिरपि। श्राद्धशेषार्घदानेच पिण्डदानेऽवनेजने। संबन्धनामगोत्राणि यथार्हमनुकीर्तयेत्। वसुरुद्रादिरूपश्च पित्रादित्रितयेक्रमात्। मातामहादिमात्रादि ज्ञेयेत्यम्रुतिमर्हतीति। तथा। वसुरुद्रादित्यरूपा श्राद्धार्थतर्पयेत्पितॄन्। नामगोत्रे समुच्चार्य तिलैस्तीर्थेषु संयतइति। तीर्थंपितृतीर्थं। ततश्चामुकपितरमुकशर्मन्नमुकगोत्रवसुरूपेतिप्रयोगः। पाद्येतुविरोधोभासते। विधिनिषेधयोर्दर्शनात्। तथाच। पाद्ये नामगोत्रेप्रकाशयेदित्युक्तम्। तथा। आमनावाहनेपाद्ये अन्नदानेतिलोदके। अक्षय्येपिण्डदानेचनामगोत्रे प्रकीर्त्तयेदिति (१)। मनुस्तुनिषेधति। हविर्मण्डलभूमौतुगोत्रमुच्चरतेयदि। अन्नसं तद्भवेद्धर्म्पितॄणांनोपतिष्ठतइति। अत्रव्यवस्था। स्वागतार्घगोत्रादिनिषेधः। पादार्घ्ये तु विधिरित्यविरोध। अस्तिचस्वागतार्घ्य विधिः पादार्घपूर्वभावी। तथाचहव्यवाक्यः। दत्त्वार्घंचालयेत्पादावाचम्यचालयेत्पुनः। पूजयेत्तुनराअन्यविप्रानभ्यन्तरेनयेत्। पुराणोप्युच्चयेपि। दत्त्वार्घंचालयेत्पादौविष्टरेपुनिवेशयेत्। पूर्वयःचालयेत्पादौपादार्घंस्ततोनयेत्। विप्रपादोदकोद्भूताम् पितृतृप्तिर्न्निवर्त्तसइति। तस्माद्विप्रानाह्वय सव्येन तूष्णींस्वागतार्घं दत्वा पादौप्रक्षाल्याचम्यमण्डलेउपवेश्य यथाविधिपुनःप्रक्षाल्याचम्य पादार्घंगोत्राद्युच्चार्यंदद्यादिति। नामगोत्रादिर्कंकया विभक्त्या कुत्रप्रकाश्यत इत्यतआह। सबन्धेचभवेत्षष्ठीचतुर्थीप्रदानतइति सामान्येनषष्ठीचतुर्थ्योःप्राप्तयोर्विशेषमाहस्मृतिः। अक्षय्यासनयोःषष्ठीचतुर्थ्येवकल्पने आवाहनेद्वितीयाच शेषाःसंबुद्धयःस्मृताइति। कल्पने संकल्पे। एतच्चान्नम-

(१) अर्घ्येऽक्षय्येपिण्डदानेऽवनेजनप्रत्यवनेजने। स्वस्त्यातोहव्येचैवस्वधाकामेतुमेथुने।

फलपादन्यत्र। तथाचब्रह्माण्डपुराणे पितृभ्यश्चततोदद्यादन्नमामन्त्रणेनतु। अमुकामुकगोत्रे त तुभ्यमन्नं स्वधानमइति। शांखायनोपि। अन्नं चासावेतत्त इत्युद्दिश्यभोजयेदिति। पठंतिच। आसंवरणेप्रतिज्ञाया मचर्ध्येदक्षिणाविधौ। संपूर्णपृच्छासनयोः पष्ठींकुर्यात्सदैवहीति। आसनेचतुर्थीविकल्पिता। तथा पृच्छाचव्यासनेपष्ठी चतुर्थीचासनेमता। अर्घावनेजनंपिण्ड मन्नंप्रत्यवनेजनं। संबुध्यैतानिकुर्वीत शब्दशास्त्रविशारदः। व्यासोपि। चतुर्थीचासनेनित्यं संकल्पेचविधीयते॥ प्रथमातर्पणेप्रोक्ता संबुद्धिमपरेजगुरिति। देशभेदेनचतुर्थीव्यवस्थितेतिरत्नावलीकारः। यत्तुसंगृहकृद्वाक्यं। अर्चव्यासनयोःषष्ठी द्वितीयावाहनेस्मृता। अन्नदानेचतुर्थीस्या च्छेषाःसंबुद्धयःस्मृता इत्यन्नदानेचतुर्थी विधायकान्तच्छेषादानविषयं। शेषाःसंकल्पव्यतिरिक्ता ऽर्घदानावनेजनादयः। संकल्पेचतुर्थ्याएवविधिः। तथाचधर्मप्रदीपे। गोत्राणामासनेचार्घे गोत्रानावाहनेतथा। अर्घे गोत्रे पितुस्तद्व त्पिण्डदानेऽवनेजने। अन्नसंकल्पनेगोत्र मक्षय्याभोजएवच। त्यागेदानेच गोत्रेभ्यो दैवेप्येतदुदाहृतमिति। त्यागेसंकल्पे। दाने। दक्षिणायाः। एतदग्रे वक्ष्यामः। अन्यत्स्मृतिशेषानुसर्थ्ययमतःश्राद्धाविशदत्युक्तम्।

## मू॰ श्राद्धेनापिनापरपक्षमतिक्रामेत् ॥२१॥

अनेनावश्यंश्राद्धमपरपक्षेकुर्यादित्यर्थः। तथाचपुराणसमुच्चये। नहिपिंडप्रदानेन श्राद्धं भवतिकेवलम्। पुष्पंपत्रं फलन्तोयं यच्चान्यदपिकिंचन। पितृनुद्दिश्यदातव्यं श्रद्धयापिहतत्परैः। तत्सर्वंश्राद्धमित्युक्तं श्रद्धयाश्राद्धमुच्यतइति॥ ननु मघाश्राद्धं सूत

कादौवार्तस्त्वसुरानेति। तत्रैवेति। प्रतिज्ञातत्वा त्कर्त्तव्यमि त्यन्ये। अत्रविचार्यते। यदिमेति तदाऽरम्भान्नियमो दोषश्वा समाप्तावित्यस्य वैयर्थ्यमुपक्रमभंगःस्यात्।यदिकुर्यात्तदाद्रव्याद्य-शुद्धौ द्विजभुक्त्यादिवैषम्याद्यैर्नैवारम्भ स्तेनैवमसमाप्तिरितिन्यायबा धस्स्यात्। तस्मात्सूतकादिव्यतिरेकेण मयापक्षश्राद्धं कर्तव्य-मिति प्रतिज्ञातेन सूतकाद्यन्तेकर्तव्यम्। अथरछसाधारणद्रव्येभ्यः पक्षश्राद्धपर्याप्तद्रव्यमुद्धृत्याज्ञात्वा नियमेनमयाकर्तव्यमेवेति प्रति-ज्ञातेन सूतकादिमध्येश्राद्धङ्कर्तव्यमितियुक्तं। यथाहपाराशरः। पाकेनिमन्त्रितेपुचकारणं यथागपराले कृतप्रतिज्ञेन सूतकम-ध्येऽपि कर्तव्यमेनमिशापीति। तथाच पुराणसमुच्चये। पक्षश्राद्धे-समारब्धे सूतकाग्निपतेद्यदि। समाकृताश्चपितरः सूतकान्तेवि-सर्जयेत्। अथवाकेचनेच्छन्ति श्राद्धंतुमृतसूतके। जन्मसूतका-मासाद्य पश्चाच्छ्राद्धंसमाचरेत्। यदिनैवन्नरःकुर्यात्सूतकान्तेच-मापनं। मार्गदत्तानिमनुष्येण श्राद्धेष्वासुरत्वमयइति। इदञ्चा-शौचान्ते तन्मध्येवा समापनं। पूर्वोक्तविषयकल्पनेन व्यवस्थेय-मित्यविरोधः। अवश्यकहेतुमाह॥

## मू॰ मासिमासिवोशनमितिश्रुतेः॥२२॥

प्रजापतिः पितृणामाहत्मा वोयुष्माकम्मृतिमासमशनं दत्तमतोऽप-रपक्षेऽवश्यमेवकर्तव्यमित्यर्थः। तथाचश्रुतिः। अथैनम्पितरःप्राचीनावीतिनन्हति अनेनश्रुत्युक्तहेतुनाऽपरपक्षेऽमावास्यायामवश्य-कर्तव्यत्वं युक्तं। तेनावहिःकुर्यादपरपक्षातिक्रमोनेत्यर्थादुक्तं। त-दतिक्रमेचोभयातिक्रमात् प्रत्यवायस्मृतेः तथाचएतान्येवमवहिः स न्तिपक्षमंयोव्यतिक्रमेत्।तस्मान्नातिक्रमे द्विद्वान्पक्षमं पैतृमेधिकं।

एतानिपुत्रायु र्धनधान्यादिफलानि । यस्तममयरंमङ्गमैतत्क-श्राद्धकालस्तथा । नविर्वपति यःश्राद्धं प्रमीतपितृकोद्विजः । इन्दुत्त-यैमासिमासि प्रायश्चित्तीयतेतुसः ॥ नियममाह ॥

## मू० तदहःशुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादीस्यादध्वमैथुनश्रमस्वाध्याया न्वर्जयेत् ॥२३॥

तदहरितिपूर्ववद्द्वन्द्वभावः । श्राद्धदिने।संसूत्रोक्तनियममनुतिष्ठेदित्यर्थः । शुचिःवाह्याभ्यंतर वमन विरेकरक्तस्रावादशुद्धिरहितः।अथवाशुक्लवासःशुचिः शुक्लवासःस्यादितनेन कषायादेर्निषेधात् । तथाचहारीतः। शुचयःशुचिवासमःस्युरिति । शंखोपि । शुचिःशुक्लवासा दर्भहस्तःस्वागतमितिब्रूयात् । श्राद्धकृच्छुक्लवासास्यादितिच । पुराणसमुच्चयेपि।एकवासास्तुयःकुर्यात्पिण्डनिर्वपनंनरः । कषायवस्त्रसम्बीतः तद्रक्षांसिभुंजते । धर्मप्रदीपेपि । कषायंखण्डवस्त्रंच रक्तवस्त्रंतथैवच । एवंविधानिवस्त्राणि वर्जयेच्छ्राद्धकर्मणि । अप्रमत्तः स्मृत्युक्तकालादौ सावधानः । तथाच । कालहीनंक्रियाहीनं मन्त्रहीनंच यद्भवेत् । पात्रहीनंचयच्छ्राद्धं भागन्तंरचसांविदुरिति । स्वाध्यायः श्राद्धमंत्रपाठव्यतिरिक्तः पाठः मैथुने पूर्वदिनेपि । शेषंस्पष्टं ।नेयंविधिनिषेधयत्ता अपितुद्दिक्मात्रम् । अतोन्यदपिविधिनिषेधरूपं स्मृत्युक्तंग्राह्यं ॥ तथाचदातृभोक्त्रोर्नियमाः ॥ नचाश्रुपातयेज्जातुनशुष्काङ्गिरमोरयेत् । नचोद्वीक्षेतशुष्मानं नचकुर्वीतमत्सरं । नदीनोपिनवाक्छन्नो नचैवान्यमनानरः ।एकाग्रमाधायमनः श्राद्धंकुर्यात्सदाबुधइत्यादि । अथचिन्त्यते । विधवापरस्त्र्यादीनां श्राद्धपाकेकर्तृत्व तिलकेकिमधिकार-

उतनेति। अत्रे केसमाचारादधिकारइति। तन्न। स्मृतिविरुद्धाचारस्याप्रामाण्यात्। तथाचव्यासः। गृहिणीचैवसुस्नाता पाकंकुर्यात्प्रयत्नतः। निष्पन्नेषु च पाकेषु पुनः स्नानंसमाचरेत्। रजस्वलाञ्चपाखण्डीं पुंश्चलीं पतितां तथा। त्यजेच्छूद्रांतथावंध्यां विधवामन्यातथैवच रजस्वलांविदिनादूर्ध्वमनिवृत्तरजस्कां। यत्तु ब्रह्मपुराणे। व्यंगकर्णीचतुर्थाहस्नातामपिरजस्वलां। वर्जयेच्छ्राद्धपाकार्थंस्वमातृपितृवंशजामित्यन्यस्त्रीविधायकं। तत्पत्न्यासंभवविषयं। अतएवपठंति। मोहात्तत्रावधुःकन्याशूद्रागभौचपरस्त्रियः। पितृपाकन्नकुर्वीतनिराशाःपितरोगताः। तथा। श्राद्धस्यपाकोविधवापरस्त्री नष्टाग्निमंतःपितरोनदेवाइत्यादि। व्यंगकर्णीत्रुटितकर्णी। तिलकेत्वापस्तंबः। ललाटेपुंड्रकंदृष्ट्वास्कंधेमालांतथैवच। निराशाःपितरोयांतिशापंदत्त्वातु दारुणमिति। एवंचसकलशिष्टाचारविरोधमालोक्यपुंड्रकनिषेधस्यनर्तुलतिलकविषयत्वमितिकेचित्। तदन्येनचमंतैत्त्वात्तिर्यक्पुंड्रं तथादृष्ट्वास्कंधेमालांतथैवच। निराशाः पितरोयांतिदृष्ट्वाचदपलोपतिमितिवाक्यात्। अतोनतिर्यक्पुंड्र्ः। तदपिन। सामान्येनतिलकमात्रनिषेधात्। तथाचपठंति। वामहस्तेषु येद्भोगृहेरंगवल्लिस्तथा। ललाटेतिलकंदृष्ट्वानिराशाःपितरोगताइति। रंगवल्लिश्चतुष्कं। अन्यत्र। ललाटेतिलकंदृष्ट्वास्कंधंमालाङ्कितंतथा। कांस्यपात्रे हविर्दृष्ट्वानिराशाःपितरोगताः। सत्यव्रतोपि। वर्जयेत्तिलकंभालेश्राद्धकालेकदाचन। तिर्यग्वाप्यूर्ध्वपुंड्रं वाधारयन्श्राद्धकर्मणीति। एवञ्चश्राद्धेतिलकमात्रनिषेधोयुक्तः। प्रयोगेत्वाशीःप्रार्थनानन्तरंतिलकविधानात् तथाच दृष्टयाञ्चयन्नः। याचितारश्चनःसन्तु माचयाचिष्मकञ्चन। ततस्तुतिलकञ्चर्योन्मन्त्रेणानेनभक्तितः। नित्यानुष्ठानसन्निष्ठाः सर्वदायज्ञबुद्धयः। पितृमातृप-

रा:सन्त: सन्त्यसत्कुलजानराइति । न वामालोचितपरम्परानुष्ठा
नंग्राह्यं । चतुर्विंशतिमतेपि । श्रुतिवेदविरोधेनपरित्यागोऽन्यथायथा
भवेत् । तथैवलौकिकस्याप्यं स्मृतिवाक्यंपरित्यजेत् । पठन्ति च ।
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं स्याचन्द्राकारमथापिवा । श्राद्धकर्त्तानकर्त्तव्यं
यावत्पिण्डान्ननिर्वपे दिति । यत्तु भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रम्वि-
नाकृतमिति । तत्सन्ध्यादिकर्मविषयतिलकपरमित्यविरोधः ॥

## * आवाहनादिवाग्यतऔपस्पर्शनात् ॥२३॥

आउपस्पर्शनादितिच्छेदः ॥ ततश्चावाहनमारभ्यचुलुकदानपर्यन्तम्म
न्त्रवर्जं श्राद्धकर्म्मौनसाचरेदित्यर्थः । तल्लोपेतुवैष्णवमन्त्रजपोवि
ष्णुस्मरणम्वाप्रायश्चित्तम् ॥

## मू० आमन्त्रिताश्चैवम् ॥२४ ॥१॥

तेप्येवमक्रोधादिवक्ष्यमाणविधिनिषेधानाचरेयुरित्यर्थः।तथाचस्मृतिः।
हुंकारेणापियोब्रूयाद्धस्ताद्वापिगुणान्वदेत् । भूतलाच्चोद्धरेत्पा
त्रं मुञ्चेद्धस्तेनवापितत् । प्रौढपादोबहिः कच्छो बहिर्जानुकरोऽथवा।
अंगुष्ठेनविनाश्नातिसुखशब्देनवापुनः । पीतावशिष्टंतोयादि पु-
नरुद्धृत्यपिबेत् । खादितार्धंपुनः खादेन्मोदकानिफलानिच ।
मुखेनवाधमेदन्नं निष्ठीवद्भोजनेपिवा ॥ इत्यमन्नंद्विज. श्राद्धे
दत्वागच्छत्यधोगतिम् । पवित्रपाणयः सर्वे तेचमौनव्रतान्विताः॥
उच्छिष्टोच्छिष्टसंसर्गं वर्जयंतः परस्परं । नस्पृशेद्वामहस्तेन भुंजा
नोन्नकदाचन । पादयोर्नशिरोन्यस्मिनपदाभाजनंस्पृशेदित्यादि ।
एवमित्यतिदेशेनभोक्तृणामपिकर्त्तव्यम्वोच्चारप्राप्ते तन्निषेधा
दन्नीकरणादिकुरुष्वेत्यादिप्रतिवचनमनुज्ञातम् ॥

इति श्री श्राद्धकाशिकायां प्रथमाकण्डिका समाप्ता ।
इदानीम्प्रयोगसुपक्रममाणः परिभाषते

## * दैवपूर्वं श्राद्धम् ॥ १ ॥

परिभाषेयमपवादव्यतिरिक्ता व्यवतिष्ठते ॥ श्राद्धमिति पित्राद्धर्मं ॥ दैवपूर्वमितिपदार्थानुसमयोक्तिः॥ ननुश्रूत्यन्तरोक्त काण्डानुसमयो नर्थकः स्यादितिचेत् ॥ पदार्थानुसमयानुक्तिविषयत्वेन सार्थकत्वात् । आहच । सकलोगुणकाण्डश्चेदेकैकस्यप्रयुज्यते । सहत्वा प्रापकोनेव प्रयोगवचनोभवेदिति। अतश्चावापवादवर्जमुपादप्रक्षालनादिसर्वंकर्मदैवपूर्वंभवतीत्यर्थः । तथा । दैवपूर्वंभवेच्छाद्धम्वर्जयित्वाविसर्जनम् । प्रश्नश्चदक्षिणाचैव भुक्तेचाचमनम्विना ॥ तथा हस्तोच्छिष्टापनयनमाह्वानञ्चविसर्जनम् । दक्षिणासौमनस्यञ्च विनान्यद्दैवपूर्वकम् । धर्मप्रदीपेपि । विसर्गश्चबुलकश्चाग्नौ करणम्पङ्क्तिवारणम् । करशुद्धिरपोशानम्पित्र्यपूर्वाणिषट्सदेति। देवलोपि । दक्षयत्क्रियतेकर्म पैतृकं ब्राह्मणाग्भ्रति। तत्सर्वंतत्र कर्तव्यम्वैश्वदेवस्यपूर्वकमिति।

## मू० पिण्डपितृयज्ञवदुपचारःपित्र्ये ॥२॥

पितरोदेवताअस्येतिपित्र्यं॥ वायृतुपित्रुषसोयदिति(१)यत्प्रत्ययः। तत्रयत्पित्र्यकर्मपिंडयज्ञवत्कार्यमित्यर्थः।अनेनापसव्यं दक्षिणाभिमुखवामजानुपातात्यतिदिष्टं ॥ अतोनीविबंधनादिपिंडोत्थापनांतं पिंडपितृयज्ञधर्माभवंति । अत्रसंदेहः । किंनीविबंधनंवामभागे दक्षिणेवेति । तत्रोभयथाचारदर्शनादायामंप्रदायंव्यवस्थेतिपारि

(१) रीङ् ऋतइतिरीङादेश यस्ये तिचेतीकारलोपेरूपम्।

जातः। तत्रविचार्यं। किंनीविर्देवकर्मपित्र्यं वेति। आद्ये पिंडपितृयज्ञेऽनुष्ठानविरोधः। अंत्ये उपवीतिवदपसव्यांगउपनीतेति। तथाचमनुः। प्राचीनावीतिनासम्यगपसव्यमतंद्रिणा। पित्र्यमानिधनात्कार्यंविधिवद्दर्भपाणिनेति। अत्रप्राचीनावीतिनेत्यपसव्ये प्राप्तेऽपसव्यग्रहणंनीवीबंधन वासजानुपातादिप्राप्त्यर्थं। किंच सर्वंकर्मापसव्येनदक्षिणादानवर्जमितिस्मृतिः। पिण्डपितृयज्ञवदित्यतिदेशोपि। यत्तुकात्यायनवाक्यं। नीवीकार्यादशागुप्तिर्नीमकुर्वीकुशैः सदा। पितृकर्मणिचैवोक्ता वेदवेदांगवेदिभिरिति। तदाभ्युदयिकविषयं। पठंतिच। दशा संगोपनंनीवीसाचाग्रेमानुषीस्मृता। पितॄणांदक्षिणे पार्श्वे विपरीताचदैविके। इहयाज्ञवल्क्योपि। दक्षिणे कटिदेशेतु तिलैः सहकुशत्रयं। तर्जयंतीहदैत्यानां यथान्नृणांयमस्तथेति नन्वेवंनीवीकार्येतिवाक्ये सदाशब्दान्नैवंविषयइतिचेत्। नीवीबंधनस्यरक्षोघ्नत्वाद्दैवपित्र्यमानुषकर्मसुयथोचितं। दशागोपनस्यविहितत्वेन सदाशब्दस्यैव मर्थत्वात्। तथाचश्रुतिः। दक्षिणतद्वर्वहियन्नीविरितिलिंगं। लिङ्गादपिविधिर्ज्ञेयइतिवाक्यात्। नचश्रुतिविरुद्धास्मृतिःप्रमाणं श्रुतिस्मृतिविरोधेतुश्रुतिरेवबलीयसीतिवाक्यात्। तस्माद्दक्षिणाङ्गएवनीविबंधः। पिंडब्राह्मणभाष्येपि। अथनीविसुद्वृह्य नमस्करोतीति कण्डिकाव्याख्याने नाभेर्दक्षिणतएवनीविस्थानमुक्तम्। तदत्रमन्त्रः पराशरोक्तः। यथा। निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेसुरदानवामया। यक्षाश्चरक्षांसिपिशाचगुह्यका हतामयायातुधानाश्चसर्वे॥

## मू० द्विगुणास्तुदर्भाः॥ २॥

सामवग्रुपलक्षणमिदम्। तथाचपुराणे। उपमूलसकृल्लूनकु-

मांसलोमकल्पयेत्। यत्रांखिलाग्यसौकांस्यमयः शुद्धोसमाहृताः। पार्थराजततामाणि पात्राणिस्युः समिन्मधु। पुष्पधूपसुगन्धादि द्योसमूलञ्चमेचणमिति। इत्यौ रासमानि एतदाहरणमाह। उद-पात्रं चकास्यञ्चमेचणं स्रुक्स्रुवादिकं। आहरेदपसव्येनसर्वंदक्षि-णतःशनैरिति दर्भाः। समूलकुशाः। तथाचयमः। समूलास्तुभवेद्द-र्भाः पितृणांश्राद्धकर्मणि मूलेनलोकानुजयति शक्रस्यतुमहात्म-नः। हारीतोपि। दक्षिणदिशातः समूलकुशानाहरेदिति। तुशब्दो-विशेषार्थः। तेनपिण्डाधस्तनकुशवर्जं सतूलादिगुणाः पित्र्ये। दैवश्रेतयाश्चयोस्तुऋजवोभवन्तीत्यर्थः तथाचस्मृतिः॥ अथसकृदा-च्छिन्नान्युपमूल(१)च्छिन्नानिभवन्ति। स्मृतिरपि। उपमूलंसकृ-च्छिन्नेर्बर्हिः पिण्डपुशस्यते। कात्यायनोपि। सपिण्डीकरणं यावद्-ऋजुदर्भैः पितृक्रिया॥ सपिण्डीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत्। देवानामृजवोदर्भाः पितृणांद्विगुणाःस्मृताइति॥

## सू० पवित्रपाणिर्दद्यादासीनःसर्वत्र ॥ ४ ॥

पवित्रमुपगहोपलक्षणं। सर्वत्र दैवेपित्र्ये च। तेनोभयत्रप-वित्रोपग्रहप्राणिरासीनश्चदद्यादित्यर्थः। तथाचमनुः। पित्र्य-मानिधनात्कार्यं विधिवद्दर्भपाणिनेति। अथवापवित्रपाणित्वमा-सीनत्वञ्चस्मृतिप्राप्तमेवात्र सार्थकत्वेनानुवदति। तेनवामहस्तेकु-शादानत्वमावाहनेचासीनत्वंनिषेधतीत्यर्थः।तथाच पठन्ति। वा-महस्तेयदादर्भागृह्णे दन्नवलोस्तथा। ललाटेतिलकंदृष्ट्वानिराशाः पितरोगताइति। किन्त्वावाहनेनागच्छन्तुपितृदु कर्त्तुरासीनत्वं नयुक्तं तथाचपिंडदानेपुराणोक्तिः। अथप्राञ्जलिरुपस्थायस्थि-त्वा चावाहयेत्पितृनिति। मन्त्रोपिगृह्योपि। आयन्तुनः पितरः

(१) मजद हिज्ञान। एजन्ये मकदो निवार्ड। कुवक्षदितानि। उपमूलाद-नानिभवतिउपमूलमसोर्पिदिनानिछिदितानीत्यर्थं। दाहच्छिदमिश्रयम्॥

सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैरिति। किन्त्वासीनोदद्या-
दिति दानेआसीनत्वं नपुनरावाहनादुग्रमस्थाने मौतिसूत्रार्थः॥

प्रश्नेषुपङ्क्तिमूर्द्धन्यंपृच्छतिसर्व्वान्वा॥ ५॥

पङ्क्तिमूर्द्धन्यः पित्र्ये प्रथमोविप्रः। लिङर्थेलट्। वाशब्दोव्यव-
स्थितविकल्पस्तुल्य विकल्पस्याष्टदोषत्वात्। इच्छास्याशीः प्रार्थ-
नादिषु सर्वेष्वपंक्तिमूर्द्धन्यइत्यर्थः। तथापुराणे। शौचस्तौयु-
क्तः कृत्वाजानुर्ध्यामन्तरे स्थितौ। समग्रयत्नोपविष्टः सर्वान्पृच्छे-
द्विजोत्तमानिति। तुल्यविकल्पोयमिति कर्कादयः। नचप्रश्नेषु प-
ङ्क्तिमूर्द्धन्यं सर्वान्वैतावतिवाच्येपृच्छतीति गौरवंस्मृत्यन्तरोक्तमवि-
ष्यर्थम्। प्रश्नेनैवतत्सिद्धेः। तथाचवृद्धयाज्ञवल्क्यः। इच्छाद्यासनम-
र्घपूरणमत धावाहनार्घक्रमो न्युब्जवार्चनभोजनाग्निस्वधं श्रेयो-
जपःकल्पनम्। दत्वान्नं जपतृप्तिपिंडयजने सुमोक्षिताद्यक्षये
आशीःपुंडकवाचनार्घवअनन्दानं विसर्गस्तुतिरिति। आदिना दे-
शकालगोलादिस्वरपविकिरादि पिंडार्चनान्तंगृहीतम्। अथा-
न्योपिस्मृत्युक्तःक्रमः। तथाच। आहारस्येगर्याध्याला ध्यात्वारे-
वस्तुनार्दनम्। स्वपितृन्मनसाध्यात्वाततःश्राद्धंसमारभेत्। अग्नि-
ष्वात्ताःपितृगणाः प्राचीरक्षन्तु मेदिशम्। तथाबर्हिषदःपान्तु या-
म्यांयेपितरस्थिताः। प्रतोचीमाज्यपास्तद्वदुदीचीमपिसोमपाः।
ऊर्ध्वतस्तर्यमारक्षेत्कव्यवाणो नलोप्यधः। रक्षोभूतपिशाचेभ्य
स्तथैवासुरदूषकः। सर्वतश्चाधिपस्तेषां यमोरक्षाङ्करोतुमे। माणा-
यामस्ततःकुर्यात् गायत्र्याःस्मरणन्तथा। श्राद्धकर्तास्मीतिवदेत् द्वि-
प्रैर्वाच्यकुरुष्वच। देवताभ्य.पितृभ्यश्चेत्यादे रादिमध्यावसानेषुजपः
आदिमध्यावसानेषु विराट्त्रवपेदुच इतिवाक्यात्। एवंपरिभाष्य
कर्मोपक्रमते॥

## सू० आसनेषु दर्भानास्तीर्य ॥ ६ ॥

पादासनन्दीपोपलक्षणम् । तथाचकात्यायनः ।विष्टरार्थं कुशान्दद्याद्विजाग्यामृवदूलतः । ब्राह्मण्यच्च । पृथक्पृथक्त्वासनेषु तिलतैलेनदीपकाः । अविच्छिन्नार्चिषं पीठ्या सेतुरक्षाहिन्नोत्तमैरिति । आसनान्याह स्मृतिः । शमीकाश्मर्यशल्लीच कदम्बोवारणस्तथा । पञ्चासनानिशस्तानि श्राद्धे देवार्चनेतथा ॥ शोपर्णीवारणक्षीरोजम्बूताम्रकदम्बजम् । सप्तमंचाकुलंपीठं पितॄणांदत्तमक्षयमिति । ततश्च सदीपासनेषु पादासनंदत्वासनेषु दर्भान्दद्यादित्यर्थः । द्वितीयमेतदास्तरणमतोस्मात्पूर्वमपि दर्भानास्तीर्योपवेशयेदिति । तथादेवीपुराणे । कुशोत्तरे तिलास्तीर्णे आसनेलोहवर्जिते । दाताचस्वासनेपूते विप्रानावेशयेत्सुधीरिति । नन्वास्तृतेषु पुनरास्तरणं कुतः । पूर्वास्तरणस्यधर्ममात्रत्वादित्तेरके।विप्रानुत्थाप्योत्थाप्यकर्तव्यमित्यन्ये द्वितीये उपवेशितानामुत्थानानुपपत्तिः । तस्मात्पूर्वमास्तरणमात्रमिह तद्दानमित्यपौनरुक्त्यं । अतश्चास्तीर्यदत्वेत्यर्थः । संकल्पत्वात् । तथाचसाम्बपुराणे । कृताङ्घ्रिःशौचानाचम्य सूपविष्टान्यथाविधिः । दद्याद्दर्भासनंतेभ्यो वैश्वदेवत्यपूर्वकं आसनेष्विति । हस्तेकुशान्नदद्यादितिसप्तम्यर्थः । दर्भाश्चैवासनेदद्या न्नतुपाणौकदाचनेत्युक्तेः । एतद्वैवेदक्षिणतःपित्र्येवामतः । पितॄणामासनंदद्यात् वामपार्श्वेकुशान्सुधीः । दक्षिणे चैवदेवानांसर्वदाश्राद्धकर्मणीतिवाक्यात् । अत्रैकआसनदाने स्वधाप्रयुंजति । स्वधाशब्दप्राप्ते. तन्न तस्यासनादौनिषेधात् । तथाचहेमाद्रिपद्धतौ । पितृभ्योनिखिलंदद्यात् स्वधाकारेणधर्मवित् । अन्यमासनचैव वर्जयित्वार्घमेवच । धर्ममदीपेपि । आसनाद्या-

नयोरर्घे तयाद्यपि वर्जनं। द्वाभ्यांशास्वधावार्थी नकुर्यादन-वीक्षनुः। तेमाम्मित्पितुरमुकशर्मगोमुकसगोत्रस्य वसुरूपस्येदमा-सनमस्त्विति प्रयोगः। केचित्सकारवर्जं गोत्रमुच्चरन्ते। तन्नतत्त्व-च्छितस्यैवोक्तत्वात्। तथा। सकारेणद्विवक्तव्यं गोत्रं सर्वत्रधीमता। सकारःकुतपोज्ञेय स्तस्मात्यत्नेनतम्वदेदिति॥

* विश्वान्देवानावाहयिष्यइतिपृच्छति॥७॥

स्पष्टं। यवानादायोंकारंचनिरंगुष्टं द्विजस्तंघ्नत्वेदंकार्यं। तथाचय-मः। यवहस्ततस्ततोदेवा न्विप्रानावाहनंप्रति। शाकटायनोपि। आवाहनञ्चकर्त्तव्यं द्विजैरोंकारपूर्वकं। गोभिलोपि। यवाना-दायोंकारंकृत्वेति। अंगुष्ठंगृहीत्वावाहयंत्येके। तन्न। निर-ङ्गुष्ठंगृहीत्वातु विश्वान्देवान्समाह्वयेदितिव्रह्माण्डोक्तेः। ततः सव्योदङ्मुखं दक्षिणञ्जान्वाच्य ऋजुकुशानादायोमित्युक्त्वा पु-रूरवार्द्रवादिप्रयोगंकुर्यादित्यर्थः। नन्वर्घान्पूरयित्वा वाह्ये द्द-तावाततत्रपूरयेदिति। उभयथावाक्यदृष्टेः। तथाहि। उमामहे-श्वरसंवादे। कुशांवुनाभ्यर्च्यगृह्य दत्वासनमनुक्रमात्। निवेश्य-तत्रविप्रान्वै कुर्यादर्घाभिपूरणम्। शन्नोदेव्यापयःक्षिप्ता यवोसी-तियवानपि। गंधपुष्पंचतूष्णींस्या दथदेवान्समाह्वयेदिति। पुरा-णोच्चयेप्यर्घं सम्पूर्यावाहनमुक्तम्। याज्ञवल्क्यास्त्वावाह्य पूर-यति। *पाणिप्रक्षालनन्दत्वा विष्टरार्थान्कुशानपि।* आवाहये-त्यनुज्ञातो विश्वेदेवासइत्यृचा॥ यवैरन्ववकीर्याथ भाजनेसपवि-त्रके। शन्नोदेव्यापयःक्षिप्त्वा यवोसीतियवांस्तथेति। यादिव्याऋ-तिमन्त्रेण हस्तेत्वर्घं विनिक्षिपेत्। अपसव्यं ततःकार्य्यं त्यादिसूत्रका-रोप्यावाह्यार्घं पूरयति। अत्रविरोधः स्मृतिपुराणयोः। स्मृतेःप्राव-

त्वा तस्तीतत्वाच्चा वात्दापूरशमिरयेके। नेत्यन्ये। स्मृताबेवार्षपू-
रणस्य पूर्वमुक्तत्वात्। तथाचक्रमपरा इतयाज्ञवल्क्यस्मृतिः। पृच्छा-
द्यासनमघपूरण मतश्चावाहनार्घक्रमइति। एवंसति दर्भानास्तीर्य
विश्वान्देवानावाहयिष्यइतिसूत्रमता याज्ञवल्क्यवचनैनेकवाक्यता
मुनिभाऽऽसनार्घदानांत याज्ञवल्क्योक्तकांडानुसमयस्याइता ऽन्यद-
पदार्थानुसमयइतिज्ञापितम्। अन्यथा वाजसनेयि परयाइत्वयाज्ञव-
ल्क्य स्मृत्यासूत्रम्विरुध्येत। तथाचासनन्दत्वा इतयाज्ञवल्क्यः। अ-
र्घपात्रं समानीय कुशद्वयसमन्वितं। शन्नोदेव्यापयःक्षिप्त्वा यवोसी-
तियवान्क्षिपेत्। गन्धपुष्पादिसंपूज्य पृच्छांकुर्याद्विचक्षणः। पूर्ण-
मसित्वतितिमन्त्रे विश्वेदेवान्समाह्वयेत्। ततस्तुक्रमयोगेन पिण्ड-
र्घन्तु निवेदयेत्। कुशांश्चतिलसंयुक्तं तिलोसीतितिलान्क्षिपेत्।
शन्नोदेव्यापयःक्षिप्त्वा शेषंपूर्ववदाचरेत्। स्वनामशर्मगोत्रैस्तु
उशन्तस्त्वेतितैततः। आवाहयेत्पितृन्सम् मन्त्र्याजपेदायंतुनःपुनरि-
ति। तनथासनन्दत्वार्घं संपूर्य संपूज्य पृच्छांकृत्वा यात्द्यार्घं दत्वे-
ति वैश्वदेवकांडंकृत्वाऽऽ समादिपितृकांडंकुर्यादितिक्रमः। वैज-
वापायनोप्यर्घानंतरं पदार्थानुसमयमाह। तस्योपरिकुशान्दत्वा
प्रदद्याद्दैवपूर्वकं। गन्धपुष्पाणि धूपंच दीपवस्त्रोपवीतकमिति।
अन्यथा कथन्दैवपूर्वमिति पदार्थानुसमयमुपक्रम्यविश्वान्देवाना-
हयिष्यइत्यादिना तत्रैवपुरावक्ष्यदित्यलंबहुना। अथपदार्थानुस-
मयकाण्डानुसमयोर्विकल्पः। विश्वेदेवानाश्वादित्यपुराणे।
विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषुकीर्तितौ। नित्यश्राद्धेमुखश्राद्धे
वसु सत्यौच पैतृके। नयान्वालभने देवौ कालकामौसदैवहि।
अपिकन्यागतेसूर्ये श्राद्धेधुरिलोचनौ। पुरूरवार्द्रवौचैव विश्वे
देवौचपार्वणे। नवान्नएलकर्मे पैतृकेनवान्ननिमित्तयाद्वै। क-

न्यागतीमूर्द्धइति केवलदाग्यवृध्याक्रियमाणे । उभयवृध्याक्षतैतु मुक्करवाद्यथावेत्ता (१ गोदोऽनेनपथुसामखे तिवन्निल्यकर्मोंयर्च मनुष्यकृतविथे रितिसारिजातः ॥

*** आवाहयेत्यनुज्ञातो विश्वेदेवासऽआ गतेत्यनयावाक्यावकीर्य विश्वेदेवाःशृणुतेम मितिजपित्वा ॥ ८ ॥**

आवाहयेतिद्विजैराज्ञप्तो विश्वेदेवासऽआगतेत्यनयाचा वाक्यावकीर्य विश्वेदेवाः शृणुतेममित्यृचंजपेदित्यर्थः । अवाकी र्येति यद्यपि द्व्यमंत्रयोरनुपदेशस्तथापियवै रोषधयः समवदंते- तिमंत्रेण च प्रदक्षिणामुदङ्मुखेनावकिरणं द्रष्टव्यं । तथायमः । यवहस्तस्ततोदेवा न्विज्ञाप्यावाहनंप्रति । आवाहयेदनुज्ञातो वि- श्वेदेवासइत्यृचा । विश्वेदेवाः शृणुतेममितिजप्त्वा ततोयवान् । ओषधयइतिमंत्रेण विकिरेत्सावप्रदक्षिणमिति । अवावाक्ययवा- न्विकिरन् ततोजपइतिक्रमः । उदङ्मुखस्तुदेवानां पितृणां द- क्षिणामुखः । प्रदक्षिणं तुदेवानां पितृणामप्रदक्षिणमितिच । न- न्वपहताइति तिलानवकीर्येत्यवकिरणेऽपहतेतिमंत्रस्य विहित त्वात् कथमोषधइति । न ।वैश्वदेवस्य स्ततएवरचोघ्नत्वादपहता इत्यस्यवैयर्थ्यात् ॥ तथाच गोभिलसूत्रं । ओषधयः समवदंतेति । अथवा मंत्रानुपदेशा त्तूष्णीमेवावकिरणं । तथाचखादिरसूत्रं । तूष्णीं यवानवकीर्येति ॥

---

(१) श्राद्धविषयेविश्वेदेवानामन्नागमेहस्मृति.
उपनिमन्त्रितमचैनेयाव विदुर्वे द्विजातय यथमुच्चारणोयस्तेमन्त्र यत्रासमन्विते आगच्छ- न्तु महाभागाविश्वेदेवामहाबलाः येयत्र विहिता. श्राद्धे सावधानाभवन्तु ते

## *पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञात उशन्तस्त्वेत्यनयावाह्यावकीर्यायन्तु न इति जपित्वा ॥

पितॄनावाहयिष्य इति पृष्ट्वा आवाहयेति द्विजैरनुज्ञात उशन्तस्त्वेत्यनयर्चावाह्यापहता इति तिलान्प्रदक्षिणमवकीर्यायन्तु न इत्यृचन्तिष्ठन्नवकीर्य जपित्वा । पितॄनिति मातामहोपलक्षणम् । ततश्चापसव्येन दक्षिणामुखो द्विगुणकुशतिलानादाय वामजानुं पातयन्नोमित्युक्त्वाऽस्मत्पितृपितामहप्रपितामहानमुकशर्ममुकसगोत्रान्वस्वादिरूपानावाहयिष्य इति पृष्ट्वावाहयेति द्विजैरनुज्ञात उशन्तस्त्वेत्यनयावाह्यापहता इति तिलानवकीर्यायन्तु न इत्यृचं तिष्ठञ्जपेदित्यर्थः । नन्वत्रापि तूष्णीमोषधय इति मन्त्रेण चावकि किरणमिति । न । रक्षोघ्नत्वादवकिरणेऽपहतेत्यस्यैव युक्तत्वात् । अतोदकस्पर्शः राक्षसत्वात् । अत्रैके विबहुत्वेऽप्रतिद्विजमेकवचनप्रयोगेण पित्रादीनावाहयन्ति । तत्पितॄनावाहयिष्य इति सूत्रोपदेशात् पितॄन्हविषे अत्तव इति मन्त्रलिङ्गाच्चोपेक्ष्यं । ननु मातामहश्राद्धे मन्त्रोहोऽस्ति न वेति ॥ अत्रैके पितृभ्यः स्वधायिभ्यः अत्र पितरः आयन्तु नः पितर इत्यादि । एवं प्रदक्षिणावृत्कोऽदृष्टो नान्दीमुखान्पितॄन् । स्वपितृभ्यः पिता दद्यात् न्नमस्येष्ट पितृश्राद्धे इत्यादिश्रुतिस्मृतिवाक्येषु पितृशब्दस्यैव प्रयोगान्मातामहश्राद्धे पि पितृशब्दप्रयोग एव न मन्त्रोह इति । इदं विचार्यं । यदि श्रुत्यादिवाक्येषु पितृशब्द प्रयोगेणैव सिद्धिस्तर्ह्यस्मत्पितरस्मन्मातामहेत्यादि प्रयोगेष्वपि पितृशब्दोक्तिरेवास्तु । अथ मन्त्रेष्वन्यथाहृतिनिषेधान्नैतेषु प्रयोगेष्विति तर्हि मन्त्रोह प्रतिपादकवाक्यानां वैयर्थ्यं स्यान्मन्त्राणां वा यथाप्रयुक्तिरित्युभययापि यथाविहितमन्त्रोहः सिद्ध-

इति । तथाच कात्यायनः । यथार्थमूहयोद्दिशे । नमस्कारावपूर्वत्वा द्वद्विवचनादिति । विष्णु रपि । आवाहनेस्वधाकारे मन्त्राऊह्या विसर्जने । अन्यकर्मण्यनूह्यास्तुरेपश्राद्धविधिः स्मृतः मातामहा-नामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेनयथान्याय शेषाणाम-न्त्रवर्जित मिति । अपिचैकोद्दिष्टे मिसर्व । एकवन्मन्त्रानूहेनेको द्दिष्टइति शेषाणांमन्त्रवर्जित मिति । पितृमातृमातामहव्यति-रिक्त पितृव्यभ्रात्रादीनामूह्य मन्त्र वर्जितमित्यर्थः ॥

## मू० यज्ञियवृक्ष चमसेषु पवित्रान्तर्हितेष्वेके कस्मिन्नप आसिञ्चति शन्नोदेवीरिति ॥१०॥

यज्ञमर्हन्तियज्ञियाः पालाशादयः । यज्ञर्त्विग्भ्यांघखञावि-तिघप्रत्ययः । तथाच श्रुतिः । तेवेपालाशास्युरित्युपक्रम्य यदि-पालाशान्नविन्दे दथोअपिवैकङ्कतास्यु र्यदिवैकङ्कतान्नविन्दे दथो-अपिकार्ष्मर्यमयाःस्युः यदिकार्ष्मर्यमयान्नविंदे दथोअपिवैल्वास्यु रथोखदिरा अथोदुम्बरा एतेहियज्ञियाइति ब्रह्मपुराणे । पलाशाश्वत्थ न्यग्रोध प्लक्षवैकंकतोद्भवाः । कार्ष्मर्योदुम्बरो-बिल्वश्चन्दन.सरलस्तथा शालश्चदेवदारुश्च खादिरश्चेतियज्ञि-याः । चमसपात्रमत्र प्रमाणमेक प्रयोजनापेक्षं । अर्थात्परिमा णमिति परिभाषासः धातुमयपरिमाणंवाहीनमिपेधात् । पवि-त्राण्यनंतर्गर्भिणि सार्ग्रमिति कात्यायनोक्तानि । पवित्रांतर्हि-तेति अर्घपात्रे पवित्र निधायोदक क्षिपेदितिज्ञापयति । कुशं विनोदकस्याप्रयत्नात् । तथाचश्रुतिः । वृत्रोहवा इदंसर्वं वृत्वाशि खइत्युपक्रम्य तदेवसामतीभ्यां पवित्राभ्यामपहंतीत्युपसंहारः एकैकस्मिन्निति मन्त्रावृत्तिदर्शकं । ततश्चपलाशादि दारुमया-

त्वे पुष्य।देवलनखेषु देवेप्रागग्रे सव्यादिना प्रागग्रपवित्रद्वयं पि
त्रो दक्षिणाग्रेषुदक्षिणासखेष्वपसव्यादिना पवित्रत्रयं दक्षिणाग्रं
न्निधाय ग्रन्नद्वतिमन्त्रेण प्रतिचममंमत्राहृत्याचतगन्तो,पञ्च सिञ्चे-
दित्यर्थं । तथाचविष्णु । दक्षिणाग्रेषु दक्षिणासखेषु चमसेष्वप
आसिञ्चेच्छन्नदति । अत्रैकेपवित्रकरणमनुपदेशात्तूष्णीमिति ।
तन्न । मन्त्रेणविधानात् । तथाच योगियाज्ञवल्क्य. । पवित्रे-
स्थइतिमन्त्रेण द्वे पवित्रे चकारयेत् । नांतर्गर्भं कुशच्छिन्नं क्षीणेमा-
देशसम्मिते । अत्रैकेपवित्रेस्थइति मन्त्रलिंगस्यपवित्रे करोति
कुशे,समा वप्रशीर्णाग्रौ कुशेछिनत्ति पवित्राभ्यामुत्पु,नातीत्या-
दिवाक्यानाच पवित्रद्वये वैयर्थात्पवित्रद्वयमेवपित्रोपीति । तन्न ।
अथोपित्रीणिस्युरिति श्रुत्यैवस्थलान्तरे पवित्रत्रयस्योक्तत्वात् ।
चतुर्विंशतिमतेपि । द्वे द्वे शलाके देवानांतिस्रस्तिस्रस्तुपार्वणे । ए-
कोद्दिष्टे शलाकैका श्राद्धे दर्भं पुनिर्क्षिपेत् । यत्तु माध्यन्दिनाना
द्वे द्वे तु पवित्रे पितृकर्मणीति तत्त्व त्रेणपवित्रद्वयच्छेदनपरं । नत्व-
र्घपवित्रनिधानपरं । अतस्थपवित्रेस्थइत्यनेनपवित्रेकुशेछित्वा-
न्यत्तृतीयेन सहार्घनिधानमितिसिद्धम् । तथाच हेमाद्रिपद्धतौ ।
पवित्रेस्थइति छिन्नमगर्भयत्कुशद्वयम् । कुशरूपेणप्रादेश मात्र न्त
त्स्यात्पवित्रकमिति । अत्रविशेषोयज्ञपार्श्वे । औषधीमन्त्रैश्चि-
त्वा न गुष्ठाङ्गुलिपार्वणे । छिद्यात्प्रादेशमात्र तु पवित्र विष्णुदै
वतमिति ॥

सू० एकैकस्मिन्नेवतिलानावपति
तिलोसीति ॥ ११ ॥

तिलानितिग-नाद्य पलेण । एकैकस्मिन्निति प्रतिपात्रं ति

लोमौत्वनेनतिलानामभेदित्यर्थः अतएवानुपदेशात्तिलवपो देवपात्रेप्येतिकर्कः। नन्वेकैकस्मिन्नित्यनुवर्तमाने पुनरेकैकस्मिन्निति किमर्थं उच्यते। तिलोसोतिमंत्रे पितृन्मोगाहीतिबहुवचनान्तेन पितृशब्देनैकद्रव्यत्वादनुचित सकृन्मन्त्रप्राप्त्यर्थ। तथाच। मन्त्रोदेव्यापयः चित्वा तिलोसीत्यावपेत्तिलान्। आवृत्तिः प्रतिपात्रं स्यान्मन्त्रस्य लोकदृश्यते। अतश्चस्वोक्तौदित्यादिति। निश्चितमेतदित्येवशब्दार्थः। नतुर्गन्धादिप्रक्षेपोपिमन्त्रेण न गन्धपुष्पंच तूष्णीमितिवाक्यात्। अतोमन्त्रस्वार्थंतत्त्वात्तिलेपि स्वाहाप्रयोगः। एवमभिन्नदारुपात्राण्युक्त्वा भिन्नमतिभसचार्थेन विधातुमत्रपात्राण्याह॥

## मू० सौवर्णराजतौदुम्बरखड्गमणिमया नांपात्राणामन्यतमेषु॥ १२॥

मणिमयानि शंखशुक्त्यादीनि। एषांमध्येषु केषुचिदित्यर्थः तथाचब्रह्मपुराणे। सौवर्णरौप्यताम्राणां स्फाटिकंशङ्खशुक्तयः। भिन्नान्यपिनियोज्यानि पात्राणिपितृकर्मणि। हारीतोपि। काञ्चनेनतुपात्रेण राजतौदुम्बरेणवा दत्तमक्षयतां याति खड्गेनाथंकृतेनतु। आर्योत्वैर्णिकाः। परिमाणं स्मृतौ। अष्टांगुलमपिस्यात्तं पितृणांरजतंशुभं। दशांगुलन्तुदेवानां सौवर्णन्ताम्रमेवचेति। औदुम्बरन्ताम्रं। धातुसन्निधेःतदुक्तं। मणिर्दर्भसान्निध्ये योऽप्रसिद्धार्थउच्यते। तत्सन्निधानसामर्थ्यात्तज्जातीयोनुगम्यतइति। पात्रोमयतुयन्नियतत्वेनैवसिद्धिः। सुवर्णादिभ्योमयड्विकारे। राजतंतुपित्र्य एव। तथाचवायौ। तथापिपितृभोज्येषु पितृणांरजतंमतं। अमंगल्यंतुयत्नेन देवकार्येषुवर्जयेत्॥

## * यानिवाविद्यन्ते ॥ १३ ॥

वाशब्दः सौवर्णादभावविकल्पे । सौवर्णादिविहिताभावेविहित प्रतिषिद्धकांस्यायसमृन्मयादीनीत्यर्थः । तेषांयानिवाविद्यन्तइति सानुशयमभ्यनुज्ञानात् । विहितप्रतिषिद्धत्वं तेषांस्मृत्युक्तं । तथाच ब्रह्मपुराणे कांस्यभाण्डानिवर्ज्यानि पितृदैवतकर्मणि । पैठीनसिः लोहसीस कांस्य पाषाणक्षौनपात्राणि भग्नपात्राणिचवर्जयेदिति । कांस्यरजतपर्ण ताम्रपात्राणिभोजनार्थयोश्चोपकल्प्यानि । देवलोपि श्रयसस्नमयानिक्षुरपिपर्णमयांस्तथा । यानिवाविद्यन्तइति प्रतिविहितराणीतिवा । विहितप्रतिषिद्धानि पूर्वपक्षयसिद्धान्तमाह ॥

## मू० पलाशपत्रपुटेषुवा ॥ १४ ॥

वाशब्दः प्रागुक्तविहितप्रतिषिद्धनिषेधार्थः ॥ तथाचहस्तयाज्ञवल्क्यः । मृद्घ्रसनौ तथाकांस्य भार कूटादिसंभवं । लघु सीसक लौहाना सर्वपात्रम्विवर्जयेदिति । धर्मप्रदीपेपि । मृत्पात्रगतमर्घंच मृत्तिकागंधलेपनं । छत्रधूपञ्चयोददान् निराशोः पितरोगताः- कात्यायनोपि । आसुरेणतुपात्रेण यस्तुददात्तिलोदकं । पितरस्तस्यनाश्नन्ति दशवर्षाणिपञ्चचेति । अतोविहितप्रतिषिद्धेभ्यः पत्रपुटाएवश्रेयस्कराइत्यर्थः । कर्कस्याथ मृन्मयस्यौकारस्तुहस्तघटितविषयः । कुलालचक्रनिष्पन्नमासुरं मृन्मयस्मृतं । तदेवहस्तघटितं स्थाल्यादिदैविकं सवेदितिवाक्यात् ॥

## मू० एकैकस्यैकैकेनददातिसपवित्रेषु- हस्तेषुयाद्दिव्याइति ॥ १५ ॥

एकैकस्येतिपित्रादिनिर्देशः । एकैकेनेति एकैकस्यैव्येतावद्-

तिरेकेनैशार्घेण लक्षणान्दानमिपैधार्थी। अतएकैकस्यैकैकेनेति नतन्त्रमित्यर्थः। तथाचकात्यायनः। अर्घेचर्योदकेचैवपिण्डदाने वनेजने। तन्त्रस्यविनिवृत्तिःस्यात्स्वधावाचनिकेजपे। एवञ्चत्रया-णामेकद्विजोपवेशने त्र्यर्घपात्राणि चोह्यं वनुद्विजनंस्ययेत्युक्तं। तथा-चस्मृतिः। अर्घंस्यात्रार्थ्यहेतुत्वाद्दातुः स्वपितृसंख्यया। पूरये-त्पात्राणि नविप्राणाञ्चसंख्यया॥ वैजवापोपि। त्रित्वात्पितृ-णांत्रीण्येवकुर्यात् पात्राणिधर्मवित्। एकस्मिन्वाबहुषुवा ब्राह्म-णेषुयथाविधीति। स्त्रोत्वांपविवादिकमितिशेषः। अवसन्देहः। वैश्वदेवे एकएवार्घ किंवाद्वौ। उभयथाबाक्यदृष्टेः। तथाहि। यज्ञि-यवृक्षचमसे मपवित्रकइतिशाट्यायनेनैवमुक्तम्। याज्ञवल्क्योपि। यवैरन्ववकीर्याथ भाजनेसपवित्रकद्दत्येकमेव। मात्स्ये। विश्वा-न्देवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकं। पूरयेत्पात्रयुग्मन्तु स्थापयेद्-दर्भपवित्रकमिति। प्रचेतसापि। एकैकस्यतु विप्रस्यार्घपात्रे-विनिक्षिपेत्। यवोसीतियवान्कीर्य गन्धपुष्पैःसुपूजितमिति द्वय-मेव। कर्काद्यस्तुएकदेवताकत्वादेकमेवपात्रन्देवमिति॥ मा-तामहश्राद्धे वैश्वदेवस्य पृथक्पात्रद्वयमित्यन्ये। इदन्विचार्यम्। किमत्रविकल्पः किम्वाव्यवस्थेति। व्यवस्थेतिब्रूमः। तथाहि। वैश्वदेवश्राद्धे पक्षद्वयमुक्तम्। तन्त्रपक्षोभेदपक्षश्चेति। तत्रयदि-भिन्नपक्षे एकमिच्छ्येत तदामात्स्यवाक्यं व्यर्थंस्यात्। अवतंत्र-पक्षे एकमिति तदोभयवाक्यसार्थक्यात्। ततस्तन्त्रपक्षे एकभि-न्नपक्षेद्वयमितिव्यवस्थया नग्रन्थविरोधइतिसिद्धम्। सपवित्रेत्वि-त्यार्घपवित्राण्येवोच्यन्ते। इस्तपवित्राणांतु पवित्रपाणयःसर्वइति-स्मृतेरेवसिद्धेः॥

## सू० असावेषतेऽर्घः ॥ १५ ॥

असाविति सम्बोधनान्तनामाद्युपलक्षणम् । एषतेऽर्घ इति प्रयोगदर्शनात् प्रधानमेवाधीत्स्वायते एतद्यत्वासनदाने । ततश्च यथाविहितं सव्यादिना वामहस्ते, अर्घपात्रं गृहीत्वा प्रागग्रपवित्रे देवद्विजकरे दत्त्वा (१) पादप्रभृतिमूर्धान्तमप्रदक्षिणम्पूजां कृत्वा या दिव्या इति मन्त्रेण पुरूरवार्द्रवसनामानौ विश्वेदेवा एष वोऽर्घ इत्यर्घं दक्षिणहस्तेन देवतीर्थेन दत्त्वा । एवं पित्र्ये पितृदक्षिणाग्रपवित्रादिद्विजकरे दत्त्वा शिरःप्रभृतिपादान्तमप्रदक्षिणं संपूज्य । या दिव्या इत्यनेनार्घं पितृतीर्थेन संबन्धनामादिभिः पितरसम्बोध्य दक्षिणहस्तेनैषतेऽर्घः स्वधेत्यर्घं दद्यादित्यर्थः । तथाच प्रचेताः । दत्त्वा हस्ते पवित्रं तु कृत्वा पूजां च पादतः । पादप्रभृतिमूर्धान्तं देवानां पुष्पपूजनम् । या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिक्षिपेत् । ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् । शिरःप्रभृति पादान्तम् नमो वइति पैतृके ॥ पितृतीर्थेन तत्तोयं दद्यात् दक्षिणपाणिनेति । अत्रैकएकद्रव्यत्वादर्घदानकर्मावृत्तौ सकृन्मन्त्र इति । तत्कर्काचार्यैर्निरस्तमित्युपेक्षितं ॥

## सू० प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधाति ॥ १६ ॥

प्रथमं पात्रं पित्र्यं नतु दैवं । तथाच स्मृतिः । प्रथमे पितृपात्रे तु सर्वान्संस्रवसंस्रवान् । पितृभ्यः स्थानमित्युक्त्वा कुर्याद्भूमावधोमुखम् । दैवपात्रमित्येके । तन्न । पितृपात्र इति विशेषात् । कात्यायनोपि । पितृपात्रमदुत्तानं कृत्वा विप्रान्विसर्जयेदिति । संस्रवाः

(१) गन्ध यवपुष्प आदाय चरणादिशिरोऽन्तकम् ॥ अर्चयेदर्चनं द्यां दत्वार्घोदकन्तथा ।

पात्रसंलग्ना अविशिष्टोदकादयः। तथाचश्रुतिः सएषवोर्ह्येवबलु-परिशिष्टोभवतीति। बहुत्वबहुशातिवाद्यपेक्षम्। अत्रकेचिदेवन्दे-वेभ्यस्थानमसीत्युक्तानं विधाय पित्र्यंन्युब्जंविधेयमिति। पित्र्यमि-त्यन्ये। विचार्यमिदम् किंमतिश्राद्धं पात्रकरणमुतपितृश्राद्धइति। यदिमतिश्राद्धं तदाष्टादशदैवत्ये पात्रत्रयकममन्त्रविरोधश्चस्यात्। अथमन्त्रोहेनाविरोधइति तर्हि पितृपात्रविध्यनर्थक्यात्। यत्तु मध्य-मपैतृकम्पात्रन्तस्मिन्पैतामहं न्यसेत्। प्रपितामहन्ततोन्यस्यनोद्धरे न्नविचालयेदितियमवाक्ये पात्रत्रयस्यैवैकीकरणं तन्मातामह श्रा-द्धपक्षेपीष्यं दृश्यतेचशाखाभेदेतच्छ्राद्धम्। तथाच विष्णुपुराणे। प्राङ्मुखान्भोजयेद्विप्रा न्देवानामुभयात्मकान्। पितृमातामहानाञ्च भोजयेच्चैवदुदङ्मुखान्। पृथक्तयाकेचिदाहुः श्राद्धस्यकरणंनृप। एक-त्रैवेनपाकेन वदन्त्यन्येमहर्षयइति। तदेतच्छाखाभेदाभिप्रायम्। तस्मात्पितृश्राद्धएव सर्वसंस्रवशब्दस्यासङ्कोचेन प्रवृत्तत्वात्पितृभ्यः स्थानमसीति पितृशब्दस्यसर्वपितृविषयत्वाच्च पितृपात्रमेकमेवन्यु-ब्जमितिसिद्धम्। ततश्चपितृपात्रे देवादिसर्वपात्र संस्रवान्नि क्षिप्य पितृद्विजवामतः पवित्रोपरिवोमुखन्निदध्यादित्यर्थः। तथा चब्रह्मयाज्ञवल्क्यः। सपवित्रं पितुः पात्रं दक्षिणाधोमुखंन्यसेत्। कात्यायनोपि। कुशवत्यां भूमावधोमुख कुर्याच्चास्योपरिचकुशा-निति। शौनकोपि। नोद्धरेत्प्रथमंपात्रम् पितृणांयच्चपातितम्। आवृत्तास्तत्रतिष्ठन्ति पितरःशौनकोब्रवीदिति। उद्धरेद्यदितत्पात्रं ब्राह्मणोज्ञानदुर्बलः। अभोज्यन्तद्भवेच्छ्राद्धम् क्रुद्धे पितृगणे गतइ-ति। मात्स्ये। पितृपात्रन्निधायाथ न्युब्जमुत्तरतोन्यसेत्। अत्रोत्त-रइत्युत्तरस्यान्दिशीतिकल्पतरुः। उत्तरशब्दस्यवामवाचकत्वात्। तथाचलिङ्गम्। उत्तरतश्रायतनाद्विस्तीर्णेति। कात्यायनश्च कृत्वा-

ग्युञ्जन्तिलैर्युता न्दक्षिणाग्रमतःपरं। पितृपात्रं निदधात्तु देवपि-
त्रोश्चमध्यतइति॥ उशनाः। गन्धादिभिःपूजयेत्तन्न्युब्जम्पात्र
वैजवापोपि तस्योपरिकुशान्दत्त्वेति॥

# * अन्नगंधपुष्पधूपदीपवाससाञ्चप्रदानम् १७,

तानिसुगन्धीनिकण्टकिजान्यपिदद्यादिति जपादिकुसुमभिं-
टीरूपिका॰सकुरण्टिका:। पुष्पाणिवर्जनीयानि श्राद्धकर्मणिनि-
त्यशः। जपा ओड्रपुष्पम्। आदिशब्दाच्छिल्प्यादिरक्तानि। रूपि-
कार्कवर्णाः। कुरंटकःपीताम्लानः। स्मृतिमंजूषायां।शिरीष विल्व
धत्तूर काञ्चनाराटरूषकं। (१) अर्कंचपारिभद्रञ्चपीतजातीं चवर्जये
त्।धूपोगुग्गुलादिः। तथाविष्णुधर्मोत्तरे। धूपोगुग्गुलकोदेयस्तथा-
चन्दनसारजः। अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच। तुरुष्क.सि-
ह्लकः। त्वग्लवंगं। मरीचिः। चन्दनागुरुणीचोभेतमालोसीरप-
द्मकं। घृताक्तंमधुनाक्तंचगुग्गुलंधूपमेवच। तथा। तुरुष्कंगुग्गुलंचै-
वघृताक्तंयुगपद्दहेत्। घृतंनकेवलंदद्याद्दुष्टंवातृणगुग्गुलम्। तृण-
गुग्गुलः। सर्ज्जरसः। धर्मप्रदीपेपि। घृतधूपञ्चयोदद्यान्निराशाः
पितरोगताः।कात्यायनः।श्राद्धे धूपंप्रयत्नेन दशांगंमधुमिश्रितम्।
दद्यादगरुजंचापि पद्मकन्देवदारुजमिति। वर्ज्यमाहविष्णुः।
जीवजंसर्वंधूपार्थइति। जी वजं कस्तूर्यादि। दीपोघृतादिद्रवे-
ण। तथामरीचिः। घृताद्वातिलतैलाद्वानान्यद्रव्यात्तुदीपकम्।
नान्येतिवसादिनिषेधो नकुसुंभादितैलानां। घृतेनदीपोदा-
तव्य स्तथवाप्यौषधीरसैः। वसामेदोद्भवन्दीपम् प्रयत्नेनविवर्ज्ज-

(१) तुलसीनिषेधोभविष्ये केतकीतुलसीपत्रबिल्वपत्रञ्चवर्जयेत् द्रोणचकरवीर
चपत्तू।कामुकस्तथाम्वष्ठ कुन्दश्चौचनोदद्यातोम्मतञ्जकष्टञ्च पिण्डे जातीचनो
दद्याद्द्वीमकेपनाचयेत्॥

येदितिवाक्यात्। वासः। कार्पासादि। तथाकौशेयंचौमकार्पासं दुकूलमहतन्तथा। श्राद्धेष्वेतानियोदद्यात् त्कामानाप्नोतिपुष्कलान्। चकारो यज्ञोपवीत तुलस्यादि समुच्चायकः। तथा। चंपकंशतपत्रं च भृंगराजंचबालकं। तुलसीमालतीपद्मं पितृणान्तुष्टिकारकं। तुलसीनिषेधेस्मृत्यर्थसारः। अर्घ पिण्डयोर्विधिनिषेधाविचारविरोधा इतिकश्चित्। प्रेतश्राद्धश्राद्धविषयो निषेधइत्यन्यः। दीपवस्त्रोपवीतकमित्युक्तम् वस्त्राभावेयज्ञोपवीतकमितिखादिरं। वृहद्याज्ञवल्क्योपि। तुलसीभृङ्गराजञ्च ह्यपामार्गं शमीतथा। पितृमूर्धनि योदद्या त्सयातिपरमांगतिमिति। अत्रसंशयः। लिंगस्थादिदानं तत्तं गौतमतियुक्तमिति। उभयवाक्यदृष्टेः। तथाहि आश्वलायनः। एषतेगन्धः एततेपुष्प मेषतेधूप एतत्ते आच्छादनम्। विष्णुरपि। नमोविश्वेभ्योदेवेभ्यइत्येवमादौ प्राङ्मुखेभ्यो निवेद्यपित्रादिभ्यो नामगोत्रेभ्य उदङ्मुखेभ्यइति। यात्रेति। इदंगासधाञ्चप्रदानम्। अतेत्ययमराधेंदृति कर्क्कादयः तत्र। तत्सपाठादेवलब्धेः। तस्मादत्रेतिपाके वृत्यन्ये। तदपिकर्कादिभिरनादृतम्। अर्घोत्तरं विप्रपूजाविधेः। तथाचयाज्ञवल्क्यः। दत्वार्घंसम्पूजयेत्त्वांगन्धधूपानुलेपनैः। मात्स्येपि। यादिव्येत्यर्घं मुत्सृज्यदद्याद्गन्धादिकन्ततइति। तस्मादत्रेतिकाण्डानुसमयंसंसूच्य। गन्धादिदानेपदार्थानुसमयोक्तोतिंतः। अतोगन्धादिदाने दैवपूर्वमित्यर्थः। तथाचवायुः। तंस्योपरिकुशान्दत्वा प्रदद्याद्दैवपूर्वकम्। गन्धपुष्पञ्चधूपञ्चदीपं वस्त्रोपवीतकमिति। गन्धश्चंदनादिः। तथा। चंदनागरुकर्पूरपद्माक्षं कुंकुमन्तथा। कस्तूरिकादयोगन्धाः पितृणान्तुष्टिकारकाः। पुष्पाणि मल्लिकादीनि तथास्मृतिचन्द्रिकायाम्। मल्लिकामालतीश्वेतयूथि-

काचम्पकं शुभम्। पिण्डीतकङ्कुमञ्च पद्मानि जलजान्यपि। उत्प-
लादीनि द्रेयानि वर्णगन्धयुतानि च। मल्लिका। चित्रफिलः। पिण्डी
तकोमरुवकः। मार्कण्डेय। आत्यश्च सर्वा दातव्या मल्लिका श्वेत
यूथिका। वनाद्भवानि सर्वाणि कुङ्कुमानि च चम्पकमिति। ब्रह्मा-
ण्डेपि। शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च। गन्धरूपो-
पपन्नानि यानि चान्यानि कृत्स्नशः। जातीविषये विरोधः जात्य-
श्च सर्वा दातव्या इति। तथा। श्राद्धे जात्यः प्रशस्तास्तु मल्लिका श्वेत-
यूथिकाः। तगरं मातुलिङ्गञ्च पिटणान्दसमचयम्। ऋतुस्तु निषे-
धनि। असुराणाङ्कुले जाता जातीपूर्वपरिग्रहे। तस्या दर्शनमात्रेण
निराशाः पितरो गताः। अङ्गिरा अपि। नजातीकुसुमानि सकृद-
लोपनमिति। विकल्पमेके। विप्रपूजादौ विधिः। पिण्डपूजने नि-
षेधः। पीतजातीविषयो निषेध इत्यन्यसम्मतम्। तथाह याज्ञ-
वल्क्य। कुन्दं गम्भीरस्तु नोदद्यान्नोन्मत्तं गरुडध्वजे। पिण्डे जाति-
श्चनोदद्या देवीञ्चार्चनीयर्चेत्। जातीपुष्पं तथार्कश्च किंशुकं-
करवीरकं। पितृभ्यश्च नियोदद्यात् स एव पितृघातकः इति। मात्स्ये
वर्ज्यानि। पद्मबिल्वार्कधत्तूर पारिभद्राटरूषकाः। न देय पितृका-
र्येष्विति। पारिभद्रो निम्बः। अटरूषो वासकः। शङ्खोपि। उग्रगन्धी-
न्यगन्धीनि चैत्यवृक्षोद्भवानि च। पुष्पाणि वर्जनीयानि रक्तवर्णा-
नि यानि च। रक्तानि जलजन्यतिरिक्तानि। जलोद्भवानि देयानि रक्ता-
न्यपि विशेषतः इति तस्यैवोक्ते। विष्णुः। वर्जयेदुग्रगन्धीनि तानि निष्क-
ण्टकिजान्यपि च पुष्पमित्युक्ता पुष्पाणि च निवेदयेत्। पयस्वी धूप
इत्युक्ता मृदन्दीपं निवेदयेत्। अनङ्गलग्नं यद्दत्तं भवेपति
तद्रागं। शङ्खोपि। इत्थोज्यो निरिच्युक्ता दीपमेवार्यमर्चयेत्।
नोनगीतिरस्तुते पश्चैञ्चयन्तदनन्तरमिति। कात्यायनेनापीत-

ख्योदकादि व्यतिरिक्तगन्धादौ तन्त्रमेवोक्तम्। एवंविप्रतिपन्नाः-
श्चेके सूत्रोक्तस्यादर्यबोधपूदति यःशब्दनिर्देशाच्च गन्धादौ तन्त्रप्र-
तोते स्त्रमत्पितृपितामहप्रपितामहाः अमुकशर्मण एतेप्रागन्ध-
दीनां तृतीयस्तृतीयांयस्मैस्य स्वधेतिप्रयोगइति। अन्येतु। पित्रा-
दीनामग्नौपोमादिव न्मिलितानांदेवतात्वा ङ्गन्धादीनांच प्रत्ये-
कन्दानस्वविधानाच्च नेदंयुक्तम्। तस्मादस्मत्पितरमुकशर्मन्नस्म-
त्पितामहास्मत्प्रपितामह इत्येवङ्गीत्वादुच्चार्य एषयोगन्धःस्व
धेति प्रयोगइत्याहुः। विचार्यमिदम्। यद्यग्नीपोमवन्मिलित
देवताभावात्पृथक्त्ववदानमित्युच्येत तदार्घादिव्यतिरिक्तप-
दार्थेषु तन्त्रविधेर्गोत्राण्यामासनेप्रोक्तमित्यादि वाक्यानान्त्ववैयर्थ्यं-
स्यात्। अथासनादिदानेषु तन्त्रविधेर्गंधादिदानेपि तद्युक्तिसत्त्वे
शाङ्खायनादुक्त पृथक्त्वेवैयर्थ्यं मित्युभयथापि संदेहःस्यात्।
तस्मादावन्यायमूलविधानं तत्र तन्त्रं यत्रप्रार्थस्य तत्रतथैवेत्युभ-
यविध्योःसिद्धिः। गंधादिषूभयविधेर्दृश्यमानत्वादुभयानुष्ठानं।
गंधादतिरिक्तेतु तन्त्रमितियुक्तम। अतस्चोस्मत्पितरमुकशर्म-
न्नस्मत्पितामहास्मत्प्रपितामहेतिनामादुच्चारणेन पृथगुद्दिश्य
वाक्यान्ते एषगोगंध स्वधेत्युभयथापि युक्तमिव भाति। गंधा
देयाद्याह कात्यायनः। गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभ
वानिच। धूपञ्चैवानुपूर्वेण अग्नौकुर्यादतःपरम्। एवंगंधादिद-
त्वाऽऽचम्य सपूर्णपृष्ठात्त्वा संस्रवोदकेन पुत्रादिकामो मुखं-
समार्ष्टि। तथाकात्यायनः। श्राद्धारंभेवसानेच पादशौचे तथा
र्चने विकरेपिंडदानेच षट्सुचाचमनंस्मृतम्। कात्यायनः। संस-
वान्समवनीय पुत्रकामोमुखमनक्तीति।

इति श्री श्राद्धाधिकायांद्वितीयाकण्डिकासमाप्ता॥

वक्ष्येनिर्वपेमसुपस्थिते। लौगाक्षिरपि । पित्रर्थं निर्वपेत्पाकंवैश्व-देवार्थमेवच । वैश्वदेवंनपित्रर्थं नदार्श वैश्वदेविकं । देवलोपि । तथेत्र्यं चितोदाता स्नात्वाप्रात: सहांबर: । आरभेत स वैभाण्डे-रन्नारंभस्तुशांभवै: । तिलानाविकिरेत्तत्र सर्वतोबंधयेदजान् । आ-सुरोपहतंसर्वं द्रव्यं शुध्यत्यनेनच । ततोन्न बहुसंस्कारा नैकव्यं-जनभक्ष्यवत् । चोष्यपेयसमृद्धञ्च यथाशक्त्युपकल्पयेदिति । मार्क-ण्डेयोपि । पृथक्पाकेननेत्यन्ये केचिदिच्छंतिपूर्ववत् । नित्यश्राद्ध-म्पृथक्पाकेनेत्येके । श्राद्धपाकादेवेत्यन्ये । किञ्च । मातामहपृ-थक् श्राद्धपक्षे प्रैठोनसि: । विधिज्ञोनैयत: श्राद्धे नाग्नौतिपितृदेव-ता: पृथक् पाकेनैवतस्मात् श्राद्धमातामहस्यवेदिति । तस्मात्पृ-थक्पाक: ।

# मू० कुरुष्वेत्यनुज्ञात:पिंडपितृयज्ञवद्धुत्वा ॥२॥

हि० कुरुष्वेत्यनुज्ञात: पिंडपितृवज्जुहुयादित्यर्थ: । अत्र-पिण्डपितृयज्ञवदुपचार इतिप्रागुक्तेपिण्डपितृयज्ञवदितिपुनरु-क्ति: परिसंख्यानार्था । तेनसाग्नेर्यथापिंडपितृयज्ञे परिस्तरणा-दितथाश्राद्धे नभवति किंत्वपसव्यादिनापर्युक्ष्य मेक्षणेनाहुतिद्वय-माहिताग्नेर्दक्षिणाग्नौस्मार्ताग्नेरौपासने यथोपदेशंभवतीत्यर्थ: । अत्रकिंचित् । अग्नौकरणहोमश्च कर्तव्यउपवीतिना । प्राङ्मुखे नैवदेवेभ्योजुहोतीतिश्रुति:श्रुते: । अपसव्येनवाकार्यो दक्षिणा-भिमुखेनच । निरूप्यहविरन्यस्मा अन्यस्मैनहिहूयतइतिकात्या-यनवाक्यात्सव्येनजुहुयादग्नावग्नौकरणआहुती इतिहरदासव-ख्यौतेश्चोभयवाक्यदृष्टे: साग्नि: सव्येनेतरोऽपसव्येनेति । तन्न । मजर्थेनेन गार्हपत्यं प्राचीनावितीतिश्रुत्या पिण्डपितृयज्ञवदिति-

सूत्राद्योभयोरपसव्ये नेवविधे: । उपवीतिनेत्यस्य पूर्वमुक्तत्वा दपसव्यं नेत्यस्य वमिद्धान्तत्वा दपसव्ये नैवसर्वेषामित्यन्ये । नेदम पि । अथातोगोभिलोक्तानामन्येषांचैवकर्मणामितिकात्यायनप्रतिज्ञया: सामगानांसव्ये न यजुषामपसव्ये नेतिवाक्यद्वयाव्यवस्थिते: । अतएवातऊर्ध्वंप्राचीनावीतिना कर्तव्यमितिगोभिलेनाग्नौकरणानन्तरमपसव्यमुक्तं । तस्मात्सामगानांसव्ये न यजुषामपसव्ये नेतिसिद्ध । तथाकात्यायन: । स्वाहास्वधानम:सव्य मपसव्यन्तथैवच । आहुतीनांयथासंख्या साचगम्याश्वमूवत: । बृहद्याज्ञवल्क्य: । छन्दोगाजुहुयु:सव्ये ना पसव्ये नयाजुषाइति । अतस श्रय: । किसाग्निरग्नौ विश्वाहस्तेग्नौकरणंकुर्यादिति । उभयविधवाक्यदृष्टे: । तथामार्कण्डेय: । आहिताग्निस्तुजुहुयाद् दक्षिणाग्नौसमाहित: । औपसदेनाहिताग्नि रन्यभावेद्विजेषु चेति । अव तुशब्दद्वयंसर्वाधानार्धाधानपक्षौसूचयति तेनाहिताग्नि:सर्वाधाने दक्षिणाग्नावेवार्धाधानेऔपासनएवजुहुयादित्यर्थ:औपसदे गृह्याग्नौ । अन्यभावोवक्ष्यमाण: । तथा । हस्तेग्नौकरणंकुर्या दग्नौवा-साग्निकोद्विजइति । अत्राग्ने. सन्निधानाद्यभावे हस्तेलौकिकाग्नौवाग्नौकरणं साग्नि:कुर्यादितिमाधवस्मृतिचन्द्रिकाकारादय: उदाहरन्तिच । आहृत्यदक्षिणाग्निन्तु होमार्थावैप्रयत्नत: । अन्यस्यंलौकिकेवापिजुहुयात्कर्मसिद्धये । अन्यथेसोपासनाग्निकार्यार्थं लौकिकाग्नौहोमइत्येके लौकिकेकल्पतरुकारादयस्तुलौकिकमावसथ्याग्निमाहु: । विचार्यमेतत् । यदाग्ने. सन्निधानाद्यभावे साग्नेर्लौकिकाग्निर्मांकारक्रदानपैत्र्यक्रियोहोमो लौकिकाग्नौ-विधीयतइति मनुवाक्यमनर्थकम् । अग्न्यभावेतुविप्रस्य पाणावे-वोपपादयेदितिनियमभङ्गप्रसङ्गात् । अद्याग्नौकरणमिति योगि-

कत्वादस्तजनादिभ्यो लौकिकाग्नौविशिष्टत्वाच्च साग्नेर्लौकिके-
एवेतितदा प्रासङ्गिकतीर्थादावपि श्राद्धत्वाग्नौलौकिकेऽग्नौकरण-
मतिप्रसज्येत। लौकिकाग्नेः सुसम्पादकत्वादग्न्यभावएव नस-
म्भवतीत्यग्न्यभावेतु विप्रस्येत्यस्यासङ्गतेश्च। तस्माल्लौकिकश्राव-
सथ्याग्निः। ततश्चहस्ते ऽग्नौकरणङ्कुर्यादग्नौवासाग्निकोद्विज
इत्यत्रवाशब्दोव्यवस्थितविकल्पे। तेनविद्यमानेश्रौतस्मार्तेवाग्नौ
तत्रहोमस्तदभावेहस्तेन लौकिकइत्यर्थः। अग्न्यभावः पञ्चधा।
प्रागभावः प्रध्वंसः सन्निहिताभावो ऽधिकाराभावो ऽत्यन्ताभाव-
श्चेति। विवाहात्प्राक्प्रागभावः। तदूर्ध्वमाहृताग्नेः प्रमादादि-
नानाशे पुनराधानात्प्राक्प्रध्वंसः। देशभ्रंशादावरणिसमारो-
पादौकृते सन्निध्यभावः। अशुद्धद्रव्यादिस्पृष्टेग्नौप्रायश्चित्तंवि-
नाधिकाराभावः। नैष्ठिकब्रह्मचर्यस्त्वभावेनात्यन्ताभावइति।
यस्त्वग्न्यभावः स्मृतस्तावदग्नावश्राद्धानिवन्दतीत्यभावउक्तः। सोय-
मप्येकोऽभावइति पृथग्दर्शनार्थं। नत्वयमेवाभावइतिनियमार्थं।
पूर्वोक्तविभागव्याघातात्। प्रागभावात्यन्ताभावयोरेऽन्यभावादे-
वाग्नौहोमाभावः। प्रध्वंसाधिकाराभावयो रावश्यकविधौसां-
कल्पिकमेवश्राद्धम्। अग्नौकरणम् अरणिसमारोपादौसान्नि-
ध्याभावस्था वश्यश्राद्धेसाग्नेरपि द्विजहस्तएवहोमइति। तथाव्या-
सः। त्यक्ताग्नेःपार्वणन्नास्ति नैकोद्दिष्टमपिण्डनम्। अत्यक्ताग्ने-
स्तुपिण्डोक्तिस्तस्मात्संकल्प्यभोजयेत्। आलस्येन नास्तिक्यादिना
वायोग्निंत्यजति तस्यैकोद्दिष्टं पार्वणसपिण्डीकरणादि सर्वश्राद्धे-
ष्वनधिकारोत्तः संकल्प्यभोजयेत्। तद्व्यतिरिक्तस्थानग्ने रग्न्यस-
न्निधानेपि सांगपिण्डश्राद्धेधिकारइत्यर्थः। ततश्च हस्तेग्नौकरणं।
संकल्पेतु। संकल्पश्राद्धेयदाकुर्यान्नकुर्यात् पात्रपूरणम्। नावाहना-

ग्नौकरणे पिण्डांश्चैव न दापयेत् । संकल्पयेत्तु यच्छ्राद्धे न कुर्यात्पा-
त्रपूरणम् । विकरश्च न दातव्य इति स्पष्टमिहोदितमिति । तस्मा-
न्नलौकिकेऽग्नाविति सिद्धं । अथ वा विधुरादीनामग्नौकरणस्यै-
ध्माधानाज्यभागपूर्वकस्य विधानात्तस्य च हस्तेऽनुपपन्नत्वात्तद्विषयो
लौकिकाग्निस्वीकारः । यदुक्तं हस्ते होम इति तत्किं देव-
द्विजकरे किं वा पित्र्य इति । उभयथाप्यनेकवाक्यदृष्टेः । तथा यमः
नाग्नौकरणमत्रैव होमो दैवकरे भवेत् । पर्यग्न्यदर्भानास्तीर्य यतो-
ह्यग्निसमो द्विज इति । कात्यायनोऽपि । मातामहस्य भेदेऽपि कुर्या-
त्तन्त्रसमाग्निकः । भेदे पृथग्वैश्वदेवं श्राद्धे तन्त्रे च साग्निके । मा-
तामहस्यापि मातामहद्विजकरेऽप्यग्नौकरणं कुर्यादिति पित्र्यकरे-
ऽर्थादुक्तम् । तथा । अनग्निकस्य विप्रस्य हस्तेऽग्नौकरणं भवेत् ।
दैवपूर्वं हि तत्कुर्यात् पितृभ्यस्तदनन्तरम् । अन्यच्च । अनग्निकस्तु
यो विप्रः श्राद्धं कुर्वीत पार्वणम् । दैवपाणौ हि जुहुयादग्नौ शेषं दद्यात्तु
पैतृके । यमोऽपि । दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विज इति ।
एवं विवादे दैवपित्र्यकरयोर्विकल्प इत्येके । साग्निः पितृकरे निर-
ग्निर्दैव इत्यन्ये । इयमपि विचार्यं । आदौ साग्नेरग्निसन्निध्यादौ ।
पित्र्यद्विजहस्तस्य चानुकल्पत्वेन विधानात् । द्वितीये तु श्राद्धविशेषा-
ण्ये वचने होमस्य न्यायस्थितत्त्वे नामार्थविफलत्वात् । पिण्डपितृय-
ज्ञवदतिदेशेन प्राचीनावीतादिप्राप्तौ देवद्विजकरे होमानुप-
पत्तेश्च । तस्मात्साग्नेरन्यसान्निध्यादौ काम्यादिवत् श्राद्धेषु पि-
त्र्यद्विजहस्ते । इतरत्राग्नाविति सिद्धम् । तथा गृह्यम् । अन्वष्टका-
सु पूर्वेद्युर्मासि मास्यथ पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दि-
ष्टमथाष्टमम् । चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते । पित्र्यब्रा-
ह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि । अन्वष्टकां नवमी श्राद्धम् । पूर्व-

दुःसप्तमीश्राद्धम् । मासिमासिकृष्णपक्षश्राद्धम्पार्वणममावास्या- यां । कृत्तिकादिनक्षत्रवारादौ । अभ्युदये वृद्धिश्राद्ध । अष्ट- म्यामष्टकाश्राद्ध । एकोद्दिष्टंसपिण्डीकरणलक्षणम् । तस्मादाहिता- ग्नेःसर्वाधानपक्षे दक्षिणाग्नौ अर्धाधाने औपासनेस्मार्त्ताग्नौ सप्त- ग्नीतवच । उभयोरप्यग्न्यसन्निधावावश्यकश्राद्धे सन्निहितेप्यग्नौ- काम्यादि चतुःश्राद्धेषुच पित्र्यद्विजहस्तएव । निरग्निवाजसनेयि प्रभृतीनांपिंडपितृयज्ञातिदेशा दमवस्यादिनापित्र्यद्विजहस्तएव। साग्निसामगादीनामग्न्यसन्निधौ सव्यादिनादेवपित्र्यकरयोर्विक- ल्पः । निरग्नीनान्तेषामपि सव्यादिनादेवद्विजकरएवेतिसिद्धम् । यत्तु, पित्र्ये यःपङ्क्तिमूर्द्धन्य स्तस्यपाणावनग्निमानिति कात्यायन- वाक्यम् । तस्यसामगपरत्वेऽयमर्थः । पित्र्येश्राद्धेपितृमातामहश्राद्धे यःपंक्तिमूर्द्धन्य.प्रथमोपवेशितदेव द्विजस्तस्यहस्तः । शाखांतरेतु पैठी- नसिः। पितृपंक्तिषुमूर्द्धन्य स्तस्यपाणावनग्निमानितिप्राग्दर्शितं। नन्वग्नौकरणम् किंप्रतिश्राद्ध किंवैकमिति । तदुक्तम् । देवपू- र्वहितत्कुर्यं त्पितृभ्यस्तदनन्तरम् । कात्यायनोपि । मातामहस्य- भेदेपि कुर्यात्तेनैवसाग्निकइति।अस्यार्थ.पूर्वमुक्तः। माधवीये देव- द्विजकरपक्षेमातामहपक्षावपि पृथग्द्वितीयमग्नौकरणमिति।पा- रिजातेतु । मातामहपृथक्श्राद्धपक्षे सत्य क्षावग्नौकरणं । अग्नि- सन्निधौ साग्नि.कुर्यादिति । एतदाचाराभावाच्चिंत्यं । आश्व- लायनविषयंवा होमद्वयम् । वाजसनेयिनांत्वेकएव होमः । तथा । वैश्वदेवेयदेकस्मिन् भवेयुर्ब्राह्मणाद्विजाः । तदेकपाणौहो- तव्य स्याद्विधिविदितस्त्वेति वाक्यवैश्वदेवइत्यस्य पित्र्योपलक्ष- णत्वे नै कपाणावेवनहोमद्वयमिति । तथाइच्छागनेयः । मा- तामहेपुयोदद्यादग्नौकरणआहुती । निराशा.पितरस्तस्य पैशा-

चेत्राद्यमुच्यतद्दति। यद्वासाग्निकमयत्र निरग्निरकत्रेतिव्यवस्थेत्यविरोधः।

## सू० हुतशेषन्दत्वा पात्रमालभ्य जपति पृथिवीतद्दति ॥ ३ ॥

पात्रमित्युद्देश्य गत मेकत्वमविवक्षितम्। ज्योतिष्टोमे दशापवित्रेण ग्रहसंमार्ष्टीतिवत्। अत.सर्वपात्रालम्भः। (१) कांस्यपात्रपरिमाणं स्मृतौ। पञ्चाशत्पलिकं कांस्यंश्राधिकभोजनायवै। स्वर्णरौप्यैस्तुसदाकार्यं मभावेहेमरूप्ययोरिति। आलभ्यजपतीति नमस्कारात्परं आलम्भः। अत्रसंशयः। किंहुतशेषमात्रन्दत्वा पात्रालम्भ उतसर्वान्नंपरिविष्येति। उभयथाप्यदृष्टेः। तथा। स्कान्दे। विप्रपात्रे पृथिवीतद्दति चान्नाभिमन्त्रणम्। इदमन्नम्ब साङ्गुष्ठं ततोऽन्नपरिवेषणम्। याज्ञवल्क्योपि। हुतशेषम्प्रदद्यात्तु भाजनेषुसमाहितः। यथालाभोपपन्नेषु रौप्येषुतुविशेषतः। दत्वान्नम्पृथिवीपात्रमिति पात्राभिमन्त्रणमिति। साग्निःपूर्वम्परिविष्य हुतशेषन्दत्वा पात्रमालभेत निरग्निस्तुहुतशेषन्दत्वान्नंपरिविष्य पात्रमालभेत। अन्नेषुपरिष्टेषु हुतशेषन्ददत्यथेतिवचनादित्यके। तन्न। साग्निर्हुतशेषंदत्त्वैवपरिवेषयेदितिक्रमस्य शौनकोक्तत्वात्। तथा। हुत्वाग्नौपरिविष्टन्तु पित्र्यपात्रेष्वनन्तरम्। निवेद्यैवापसव्येन परिवेषणमाचरेदिति। हुतशेषमपसव्येन निवेद्येत्यन्वयः। यदुक्तं निरग्निर्हुतशेषंदत्वान्नम्परिविष्य पात्रमालभेतेतितन्न। अन्नेषुपरिविष्टेष्वितिवचनस्यवैयर्थ्यापत्ते.। ततश्चसाग्निर्हुतशेषंदत्वा न्नम्परिविष्य व्यस्तपाणिभ्यांपात्रमालभेत। निरग्नि स्त्वन्नं-

(१) भोजनपात्रे प्रमाण पत्रमाध्यपर्णवर्जितम् हेमाद्रौ पलाशैश्चैविनानम्पुपर्णपात्राणिभोजने अपिवाकाम्यपत्रैर्दुर्वेर्णवत्रैचवाहवि ॥

परिविष्य हुतशेषन्दत्वा तथैवपात्रमालभेतेत्यर्थः। विप्रपात्रे पृथिवीतइतिवाक्ये एततेनपरिवेषणमित्यत्रान्नशब्दो योगेनव्यञ्जनपरस्तेनन्नान्नपरिवेषणस्य पात्रालम्भानानन्तर्य्यविरोध.। तथापुराणसमुच्चये। भाजनालम्भनङ्कुर्य्याद्दत्वाचान्नंयथाविधीति। १'अस्पाणिलपाङ्गे। दक्षिणन्तुकरंकृत्वा वामोपरिनिधायच। दैवंपात्रमथालभ्यपृथिवीतेपात्रमुच्चरेत्। २ दक्षिणोपरिवामञ्चपित्र्यपात्रस्यलम्भनमिति।अत्रे कोहुतशेषन्देवपात्रे नपुनर्देयमिति। तथायमः। अग्नौकरणशेषन्तुपित्र्ये पिप्रतिपादयेत्प्रतिपाद्यपितॄणान्तुनदद्याद्वैश्वदेविकेि।शौनकोपि। हुत्वाग्नौपरिशिष्टंत्विति प्रागुक्तम्। वायुपुराणेपि। हुत्वादेवकरेणाग्निं शेषंपित्र्ये निवेदयेत्। नहिस्मृताःशेषभाजोविश्वेदेवाः पुराणगैरिति। अन्येत्वविशेषात्सर्वेभ्योदेयमिति।सूत्रकारोपि। दैवपूर्वंश्राद्धमिति। अत्रोच्यते।आदेश्यदुक्तंनदेयमिति तन्न। वाक्यार्थानवबोधात्। तथाहि। अग्नौकरणशेषन्तु पित्र्येपीत्यपिशब्दाद्दैवेपिशेषदानोपपत्तेः। पितॄणाम्प्रतिपाद्यवैश्वदेवेनदद्यात्किन्तुप्रागदैवे ततःपित्र्यइत्यर्थोपलभ्येत। यदुक्तं हुत्वाग्नाविति वाक्यं तत्साग्निविषयम्। यदप्युक्तं हुत्वादेवकरेइति तत्रदैवेहुत्वाशेषम् पित्र्ये दद्यान्नतुवैपरीत्येत्यर्थ। अतोर्थानवबोधादित्युक्तम्। केतर.। उक्तहेतोःसाग्निनिरग्न्योर्विशेषावगते.।.नचोभयवाक्योत्सत्यविशेषोयुक्तः। क्वचिद्विषयान्तरस्यादृष्टेः। ततश्चसाग्नेरग्निहोमोत्तरं हुतशेषप्रदानं पितृपात्रेष्वेव। निरग्नेर्दैवकरहोमे पितृपात्रेष्वेव पित्र्यकरहोमेतु निरग्नेर्दैवादिसर्वपात्रेषु

(१) प्रचेता' उत्तानदक्षिण मध्ये नोचम्यावाणभुपस्पृशेत ॥

(२) पित्र्ये तु विशेष उत्तानेनतुहस्तेनकुर्वीतवावगाहन ॥ अग्नरतद्रवेच्छाद भुपितॄणाश्री' रिहतेरितिविश्व.॥

हुतशेषप्रदानमितिसिद्धम् । तथाशाकलायनः । हुतशेषंप्राग्देवेदत्वा पश्चात्पित्रे इति । कात्यायनोपि । विप्रपाणौततोहुत्वा दद्यात्स्वे-षंपृथक्पृथक् । देवानामादितःकृत्वा पितृपात्रे पुनःक्रमात् । इच-मनुः । दैवपूर्वयतःश्राद्धं तस्मात् दद्यात्प्रयत्नतः । अग्नौकरणशेषञ्च देवानामादितःक्रमात् । वैश्वदेवादितःसर्वं विकरंपिंडवर्जितं । अग्नौकरणशेषंच तमददात् दैवदेविके । धर्मप्रदीपेपि । कुशेषु-त्तानपाणिस्तुजुहुयाद्दैवतस्तुतं । शेषंदेवायदातव्यं पितृभ्यस्तद-नंतरमिति । साग्निर्दैवपूर्वंददात् निरग्निर्नैत्यविरोधइत्येके । एवंदत्त्वापिंडार्थमवशेषयेत् । तथाहारीतः । कृतोच्छिष्टमाम्ना-याभ्यः पिंडार्थमवशेषयेत् । धर्मप्रदीपेपि । अग्न्यभावेतुविप्रस्य हस्तेकृत्वातुदक्षिणे । शेषयेत्तितृविप्रार्थंपिंडार्थंशेषयेत्तथेति ।

**मू० वैष्णव्यर्चा यजुषावांगुष्ठमन्नेवगा-ह्यापहता इतितिलानवकीर्येति ॥ ४ ॥**

वाशब्दो समुच्चये । (१) वैष्णवीऋगिदं विष्णुरित्यादिका ।(२)य-जुश्च विष्णोहव्यं रक्षेति ततोएकतरेणानखंद्विजांगुष्ठमन्ने निवे-श्यापहता इत्यनेनतिलान्पात्रसमन्तात् प्रदक्षिणादिक्रमेणविक-रेदित्यर्थः ।निरङ्गुष्ठम्प्रदत्तं हि पितॄणान्नोपतिष्ठतइतिवाक्यात् । नोपतिष्ठत इत्यासुरंभवतीत्यर्थः । तथायमः । निरङ्गुष्ठन्तु यच्छ्राद्धं वहिर्जानुचयद्धुतं । वहिर्जानुचयद्भुक्तं सर्वमेवासुरम्भवेदिति । अत्रैके तिलानन्नपात्रेष्वेवाधकिरति तन्न । तिलान्सर्वत्रनि-क्षिप्य पितृपात्रेपुवर्जयेत् । पितृपात्रे तिलान्दद्यान्निराशाः पित-रोगता इतिवाक्यात् । पराशरोपि । सर्वदाचतिलायाह्याः श्राद्ध-

( १ ) नियताक्षरपादायमानाऋक् ॥

( २ ) अनियताक्षरत्वम् अपादायमानत्वं यजुः ॥

कालेविशेषतः। पात्रेषुपतितान् दृष्ट्वानिराशाःपितरोगताइति। यत्तु ततोमधुघृतान्नन्तु सोष्णमन्नन्तिलान्वितं। गृहीत्वादैवतीर्थेन प्रणवेनतर्पयेत्पुनः। एतद्दोअन्नमितियुक्त्वा विश्वेदेवांस्तुभोजयेदित्यत्र तिलान्वितत्वमन्नस्योक्तं तद्दैवदैवविषयंवा। तथामात्स्ये। उभाभ्यामपिहस्ताभ्यां माहृत्यापरिवेषयेत्। प्रशांतचित्तः सतिलं दर्भपाणिरशेषतइति। सतिलमन्नंहस्ताभ्यामेवपरिवेषयेन्नैकेनेत्यर्थः। तथा एकेनपाणिनादत्तं शूद्रादत्तंनभक्षयेत्। पुराणेपि। नापवित्रेणहस्तेन नैकेनविनाकुशान्। नायसेनायसेनैव श्राद्धेतुपरिवेषयेदिति। आयसेनेत्यायसमेनचपात्रेणान्नं नधार्यमित्यर्थः। सौवर्णराजताभ्याञ्च खड्गेनौदुम्बरेणवा। दत्तमक्षयतांयाति फल्गुपात्रेणचान्यथेति वाक्यात्। फल्गुउदुम्बरः। पवित्रेणेति सपवित्रकरः स्वयम्परिविष्येदित्यर्थः। फलस्यानन्त्यं तान्योक्त्वा स्वयन्तुपरिवेषणे इतिवायुवाक्यात्। यत्तु परिवेषणे प्रशस्तंहि भार्ययापितृतृप्तये। पितृदेवमनुष्याणां स्त्रीसहायायतः स्मृतेति। तदन्यापिचया स्वाशक्तौ वावेदितव्यं। नविनाकुशानिति केवलनिषेधः। हस्तेदत्वातुयः स्नेहं व्यञ्जनंलवणादिकं। दातारोनोपतिष्ठन्तेभोक्ताभुङ्क्तेतुकिल्विषं। घृतंवायदिवातैलं विप्रोदद्यान्नखच्युतम्। यमस्तदशुचिंप्राह तुल्यंगोमांसभक्षणमितिवाक्यात्। कात्यायनोपि। दर्व्यादेयंघृतान्नञ्च समस्तव्यञ्जनानिच। अपक्वंस्नेहपक्वम्वा नतुदर्व्याकदाचन। स्नेहात्तञ्चतथाऽपक्वम्। दर्व्यादातुमिच्छति। सभ्रूणहासुरापश्च सस्तेयीगुरुतल्पगः। यमोपि। चतुः श्रोतसमायुक्तो हस्तेनोन्मार्जयेद्घृतम्। उभावपोत्रजेयाताम् दाताभोक्तानसंशयः। उन्मार्जनंगोधनम्। स्नुतं नखैश्चतुर्भिश्च योदद्यात्पाणिनाघृतम्। दातापुण्यंनवाप्नोति भो-

क्तापापगतम्भूजेदिति। अपहताइति पित्रा एव नदैवे व्रतपवरचो-घ्नत्वादितिकर्कः। तूष्णींयवान्विकरेदित्यन्ये। अत्र यदग्यन्नादि काज्यनंनोक्त तथापीदमन्न मिमायाप इदमाज्य मिदंहव्य मित्य-न्नादिकल्पनङ्कार्यंन। तथाकात्यायनः। उभाभ्यामपिहस्ताभ्यां पात्रं-धृत्वातुतन्दृढम्। मोचयेद्व्रिष्यं हस्त मन्नन्तत्कल्पयेत्सदा। तथा। स्पर्शनान्तेस्पृशेदन्नम् नकल्पान्तेवलिंहरेदिति। अतकव्यादि नोच्चरेदिति कश्चित्तन्न। विप्रोहव्यञ्च कव्यञ्च ब्रूयादलं तिवैक-मादिति मनूक्तेः। पुराणसमुच्चये। हव्यंदैवेसमुच्चार्यं पितृणांक-व्यमेवच। कव्यस्योच्चारणादेव प्राप्नुयुस्तृप्तिमुत्तमां। कव्यादापित-रःप्रोक्ता स्तस्मात्कव्य मकीर्तयेदिति। ननु किंपरिवेषणे सव्या-पसव्यविधिरस्तिनवेति। तत्रास्तीत्ये के। तन्न। उभयत्रसव्ये न विधिः। तथाकार्ष्णाजिनिः। अपसव्ये नकर्तव्यं पित्रङ्कृत्यंविशेषतः अन्नदानादृतेसव्य मेवमातामहेष्वपि। भुजवलोपि। सर्वकर्मा-पसव्ये न पितृकर्मणिकुर्वता। अन्नदानादृतेकार्यं तद्वद्विप्रविसर्ज-नमिति। तथा। एकपंक्त्युपविष्टानान् विप्राणांश्चकर्मणि। भक्ष्यंभोज्यासनन्दद्या द्विपरीतन्तुनिःफलम्॥

## सू० उष्णं स्विष्टमन्नंदद्यात्॥ ५॥

उष्णमिति पर्युषितापूपादिनिवृत्त्यर्थम्। तेनस्त्यक्तमपिप-र्युषितमपूपादि श्राद्धे नदद्यादित्यर्थः। तद्विधिश्च। यवगोधूमजंसर्वं पायसश्चैवविक्रिया। तत्पर्युषितमप्यद्यं स्नेहाक्तञ्चैवयन्नवेदित्यादि। पर्युषितमप्यशक्तदेयमित्येके। तथायमः। अपूपाश्चकरम्भाश्च। धानावटकसक्तव.। शाकम्मांसमपूपञ्च घृतकैनरमेवच। यवागुःपा-यसञ्चैव यच्चान्यत्स्नेहसंयुतम्। पूर्वंपर्युषितभोज्यं भुक्तञ्चेत्परिव-र्जयेत्। देवलोपि। अभोज्यंप्राहुराहारं शुक्तंपर्युषितञ्चयत्।

अत्रमोद्यादिषु अपूपभक्षणार्थं पुनरपूपोक्तिः। शङ्खोपि। दधिभक्ष्यञ्चगुडेषु सर्वंस्वदधिसंभवम्। यवचीसपक्कमभ्यंस्या त्सर्पियुक्तमितिस्थितिरिति। तन्न। अभुक्तपर्युषितस्य इष्टादिदोषोपहतत्वेन नित्यभोजनविषयत्वात्। तेषामप्युषानामेव श्राद्धेपयोगात्। तथाआदित्ये। विविधम्पायसंदद्या द्भक्ष्याणिसुबहूनिच। लेह्यं चोष्यं तथापेयं मुण्मेवफलंविना। वायौ। भक्ष्याण्येवकरम्भाश्च इष्टकाघृतपूरिकाः। कृशरामधुसर्पिश्च पयःपायसमेवच। स्निग्धोष्णानिचयोदद्या दग्निष्टोमफलंलभेदिति। करम्भादधिसक्तवः। इष्टका. कासारखण्डाः। कृशरस्तिलकल्कायुक्तौदनः। स्विष्टमिति सुशब्देनर्नैर्मल्यं विविधत्वञ्च दर्शयति। तथायमः। ततोविशदमन्नाद्यं भोजयेत्प्रयतोद्विजान्। अन्नंसूपंघृतंशाकं मांसन्दधिपयोमधु। धानाश्चमधुसंयुक्ता इक्षूंश्चैवसगोरसान्। शर्करांफलमूलञ्चसर्वन्दद्यादमत्सरीति। मनुरपि। भक्ष्यंभोज्यञ्चविविधं मूलानिचफलानिच। हृद्यानिचैवमांसानि पानानिसुरभीणिच। विविधमित्येकान्ननिषेधः। ततोन्नबहुसंस्कारं नैकव्यञ्जनभक्ष्यवत्। चोष्यपेयमसृष्टन्तु यथाशक्त्युपकल्पयेदितिवाक्यात्। अन्नमित्यादनीयम्। अन्नमितिचक्रसञ्ज्ञावा रसंचेलगतप्राहुः सतुषंधान्यमुच्यते। आमान्नंसतुषंप्रोक्तंपक्कमन्नमुदाहृतमितिशास्त्रात्। तेनसंभवेसत्यामान्नादिकं न्नदेयमित्यर्थः। दद्यादिति यथोक्तसंकल्पवाक्य न्दर्शयति। यथैके। अर्घेचश्राद्धेदक्षेचैवेति कात्यायनेनान्नदाने तत्क्षःदर्शित्वा दक्षात्पितपितामहप्रपितामहामुकशर्माण इत्यादुच्चार्यतृतीयस्तृतीयोंश स्मैश्य स्वधेतिसंलग्नदद्यादिति। अन्येत्वन्नं वासानितत्तद्दत्युद्दिश्य भोजयेदिति शांखायनोक्तेरमुकामुकगोत्रतत्तुभ्यमन्नंस्वधानम इतिब्राह्मो-

त्तो श्च । पृथगुद्दिश्यदद्यात्सन्ततस्तेयेति । एवंसत्यस्मत्पितरमुकशर्मन्नस्मत्पितामहास्मत्प्रपितामहेत्यादि पृथक्पृथगुद्दिश्य वाक्यान्ते इदमन्नंसघृतादि वःस्वधानमइत्तत्रभयथा वाक्यमुचितमित्तराभाति । तत्त्वपार्थक्ययोरुपदेशात् । अथच ब्राह्मणाविक्तसंपत्ता वैकैकस्यापितित्रयः । एकोवैकस्यभोक्तव्य स्त्रयाणामेकएववेतिवाक्यात्पृथगुद्दिजपक्षेपृथगुपदेशः । त्रयाणामेकद्विजपक्षे तन्त्रेणेत्यविरोधः । अतएके इदमन्नंवः स्वधेतिसंकल्पे नममेतित्यागंनकुर्वन्तितन्न । स्वसत्तानिवृत्तेरुक्तत्वात् । तथाश्रविः । हस्तेनमुक्तमन्नाद्यमिदमन्नमुदीरयेत् । स्वाहेतिचततःकुर्या त्स्वसत्ताविनिवर्त्तनं । सम्बन्धगोत्रनामानि इमन्नन्ततःस्वधा । पितृक्रमादुदीर्यंते स्वसत्ताविनिवर्त्तयेत् । धर्मप्रदीपेपि । ततोन्नं पितृदेवेभ्यः संकल्प्यचयथाविधिः । दत्तंयद्दास्यमानंतत् आतृप्तेर्नममेतिच । एतत्संकल्पोदकंहस्ते नदेयम् । तथाधर्मप्रदीपेपि । सिद्धान्नस्यतुसंकल्पो भूमावेवप्रदीयते । हस्तेपुदीयमानंय त्पितॄणांनोपतिष्ठते । भूमिर्जननी सर्वेषांभूतानांचविशेषतः । तदोपतिष्ठतेन्नंतु नचहस्तेकदाचन । स्मृतिमंजरीकारोपि । दीपमन्नंचपिण्डञ्च भूमौदद्याद्विचक्षणः । पूर्वदानानिविप्राणां करेदद्याद्दक्षिणे । तथा । तिलदर्भसमायुक्तं तोयंभूमौप्रदापयेत् । पात्रस्यसन्निधौपित्र्ये दैवेयवसमन्वितं । वैश्वदेवस्यवामोरु पितृपात्रस्यदक्षिणे । संकल्पोदकदानंश्राद्धेत्यथाद्वं यथाविधीति । अतएवनसङ्कल्पेनन्नंद्विजानस्पृशेयुःपात्रस्यनोद्धरेयुः । तथाश्रविः । असङ्कल्पितमन्नाद्यम्पाणिभ्यांयदुपस्पृशेत् । अभोज्यंतद्भवेद्दत्तं पितॄणांनोपतिष्ठते । अकृत्वेवंनसङ्कल्पेय पात्रोद्धरेद्विजः । वृथाश्राद्धमवाप्नोति दाताचनरकंव्रजेदिति । सङ्कल्पोत्तरमपोशाना त्प्रागंनंनगृह्णीयात् । तथातत्रैव ।

त्काद्वा दुष्कृताद्वापि जायते । हत्वा जन्तून् भक्षेन्मांसं तस्मात्तत्परि-
वर्जयेत् । एकस्य क्षणिकाप्रीत्यै अन्यः प्राणैर्वियुज्यते । अहो मांस-
स्य दौरात्म्यं प्रत्यक्षमिह दृश्यते । किञ्च । यूपं छित्वा पशून् हत्वा
कृत्वा रुधिरकर्दमं । यद्येवं गम्यते स्वर्गे नरके केन गम्यत इत्यन्ये ।
कलिविषयो मांसनिषेधो विधिस्त्वन्यविषय इति । तथा अक्षता गौः
पशुश्चैव श्राद्धे मांसं तथा मधु । देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्ज-
येदित्यपरे । देशविषयो निषेध इत्यन्ये । तस्माच्छ्राद्धे मांसनिषेध
इति । अत्रोच्यते । यदुक्तं मुन्यन्नं ब्राह्मणस्येति प्राधान्यान्मांसं
क्षत्रियविड्विषयं न ब्राह्मणस्येति । तन्न । मांसाद्युत्कर्षस्य भाव एव
मुन्यन्नादिप्राधान्योपपत्तेः । तथा आत्रेयः । मुन्यन्नामिषमाध्वीकैः
विप्रक्षत्रजघन्यजाः । श्राद्धं विदध्युरथवा द्रव्यैरसति वापरैः । मा-
ध्वीकं मधु । द्विजौ क्षत्रविशौ । जघन्यजाः शूद्राः मांसादिद्रव्ये-
ऽसति मुन्यन्नादिभिः क्रमाद्विप्रादयः श्राद्धं कुर्युः सति तु मांसादौ
तेनैव । तथा वृद्धशातातपः । मुन्यन्नामिषमध्वाज्यैरभावे प्रोक्त-
वस्तुनः । क्रमाद्विप्रादिभिर्वर्णैर्विधेयमिति शुश्रुमः । परमान्ने-
न मांसेन शाकैर्मधुघृतादिभिः । सर्ववर्णैः प्रकर्तव्यं श्राद्धं वैचित्त्यगा-
ढात् । एवमन्यत्रापि । मुन्यन्नैर्ब्राह्मणाः श्राद्धं आमिषैर्बाहुसम्भवाः
ऊरव्या मधुना कुर्युः शूद्रा मूलफलादिना । अशक्यपेक्षमेतद्वृ-
द्धिकेवलम् । सर्ववर्णैस्तु कर्तव्यं सामिषं सति सम्भव इति । यच्चाप्युक्तं
प्राणिहिंसापूर्वक एव श्राद्धे मांसनिषेध इति । तदपि न । सामान्य-
हिंसाया अग्नीषोमीयपशुहिंसाविधिविहितहिंसया बाधोपप-
त्तेः । तथा जाबालः । हिनस्ति यः पशून् श्राद्धमुद्दिश्यैव स पापभाक्
श्राद्धापदेशतो हिंसामपि श्राद्धे न दुष्यति । स्कान्देऽपि । सर्वदेवपितॄ-
नर्चि यो हिनस्ति पशून् द्विजः । स यज्ञफलमाप्नोति ते च यान्ति परां-

कृतिम्। स्वार्थमन्नम्पचेद्यत्तु योहिंसनिहतस्थापदम्। एकाकौमिष्टमश्नाति वयस्तेयान्निरौरवम्। भीष्मोपि योहिंसकानिभूतानि हिनस्त्यात्मसुखेच्छया। कृष्णद्वैपायनेःप्राह स्वावरत्वंसगच्छति। अत्रिरपि। मधुपर्के च सोमे च दैवेपित्र्यकर्मणि। अत्रैवपशवो हिंस्या नान्यत्रेतिकथञ्चन तथा। यज्ञार्थम्पशवोवध्याः सुतार्थेपरयोषितद्दत्यादिवाक्यात्। अदृपिकलिविषयोनिषेध इतितद्पिन। कलिविषयविधायकवाक्यस्तद्दचनस्यवाधात्। तथाजातूकर्ण्यः। मांसंयुगेषु सर्वेषु यज्ञश्राद्धेमाहृतम्। श्राद्धोपयमनेयज्ञे कलौतच्चविशिष्यते। सुमन्तुरपि। कृतकोपशुताविमाः कलौचेत्स्यान्निरामिषम्। तृप्तिंनेच्छन्तिपितरस्तस्यश्राद्धे कदाचन। पैठीनसिः। परमान्नं कालशाकं मधुमांसंघृतम्पयः मुञ्जन्त्यानिति लाविप्राः प्रकृत्याद्यविरुद्धधा। शस्तान्यष्टौतु सर्वेषांयुगेषुमुनिसत्तमाः। पितृणांदैवतानाञ्च दुर्लभानिकलावपीति। निबन्धान्तरेचैतद्वाक्य निर्मूलत्वप्रतिपत्तेश्च। तथा। गोमेधोनरमेधश्च अश्वमेधोपशुस्तथा। देवराच्चसुतोत्पत्तिः कलौपञ्चविवर्जयेत्दति पराशरोक्तेः। यत्तु देशविषयोनिषेध इतितद्पिन। मध्यदेशादौ शिष्टालुतया ऽविहित मांसभक्षणोपलब्धेः। नचदेशविषयः शक्यतेवक्तुं। देशभेद विषयस्यनिरासात्। तथा हृद्यप्रचेताः। नयुगानांनदेशानां नविप्राणांद्विजोत्तमाः धर्मशास्त्रेषुवैभेदो दृश्यतेमांसभक्षणे। देशदेशभेदे श्राद्धे दृश्यमानत्वाच्च। तस्माद्विहित हिंसादौ श्राद्धादिकर्मसुच मांसभक्षणविधिर्नेतरत्रेतिसिद्धं। तथामनुः। प्रोक्षितभक्षयेन्मांसं ब्राह्मणस्यच काम्यया। यथाविधिनियुक्तस्यप्राणानामेवचात्यये। याज्ञवल्क्योपि। प्राणात्यये तथाश्राद्धे प्रोक्षितन्द्विजकाम्ययेति। भक्ष्यच्छागादिविहितमांसं। देवलः। पञ्चपञ्च-

या। अल्पदोषमिति ज्ञेयम् विपरीते तु लिप्यत इति महाभारत-
वाक्यम्। तदेव विधिना कुर्यात् स्वर्गप्राप्तिमानव इत्यपि तत्र।
क्षत्रियप्रोक्षितम्मन्त्रैः प्रोक्षिताभ्युक्षितं भुवि। वेदोक्तेन प्रकारेण
पितृणाम्प्रक्रियासु च। पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते। वि-
धिना वेददृष्टेन तद्भुक्त्वान्येन दुष्यतीति यमवाक्यं। सर्वेषामेव मां-
सानां महान्दोषास्त्वभक्षणे। निवर्तने महापुण्य मिति माह प्रजा-
पतिरिति। यच्च भारतवाक्यम् अभक्षणेन महान् दोषो निवृत्त्या-
पुण्यमुच्यत इति तदुभयमपि श्राद्धादेरन्यत्र जिह्वालतया भक्षण-
विषयं। तथा स्कन्दपुराणे। यत्र यत्र निषेधो हि श्रूयते मांसभक्षणे।
जिह्वालान्प्रति स ज्ञेयो न तु शास्त्रविधिनाश्नतां। तथा। प्रयान्ति न-
रकं घोरं मांसमश्नन्ति ये नराः जिह्वालान्प्रति दोषोऽयं न दोषो वि-
धिनाश्नतामिति। यच्च बृहस्पतिवाक्यम्। रोगार्त्तोऽभ्यर्थितो-
वापि मांसं नाश्नन्त्यलोलुपः। फलम्प्राप्नोत्ययत्नेन सोऽश्वमेधफल-
स्य चेति तच्छ्राद्धे ब्रह्मचारिविषयम्। तथा मनुः। व्रतवद्देवदैवत्ये
पित्र्ये कर्मण्यथर्षिवत्। प्रकाममर्थितोऽश्नीया द्व्रतमस्य न लुप्यत इत्ये-
कमभिक्षायां व्रतवदृषिवद्दर्शनस्य विधानात्। अलोलुप इत्यनेन
तद्विषयावगमाच्च तथा। स तपति तपोजप्यम यजते च ददाति-
च। मधुमांसनिवृत्तो यः प्रोवाचेदं बृहस्पतिः। जैमिनिरपि। ब्रह्म-
चर्यमुपास्यैव ये कृत्वा दारसङ्ग्रहम्। सन्न्यसेन्नाधिकारस्यान्मांसवि-
धिवदन्यत इति। अन्यत इति दारसंग्रहादूर्ध्वम् विधिवन्मांसभक्ष-
णाधिकार इत्यर्थः। तथा मनुः। न मांसभक्षणे दोषो न मद्ये न च मै-
थुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति। मांसमद्यमैथुनेषु
त्रिष्वितेषु भक्ष्यभोज्यान्नपानाभिगमने भूतप्रवृत्तित्वान्न दोषः।
निवृत्तिस्तु महाफलप्रापिकेत्यर्थः। महतो मघवाच फलाचेति व्युत्-

क्ते.। न वंवंच्युत्यत्ति नं ताधुः। फलाफलशब्दयोः पंर्यायकमश्चापि मडच्छन्द्साकारादे स्य वक्ष्यमाणत्त्वात्। तथाट्टहस्पतिः। अभ्न्यांसपुरे।डाशे भक्षणं मृगपक्षिणाम्। पुराणेष्वेषयज्ञेषु ब्रह्मक्षत्रमवेगु च। सौत्रामण्यांतथामद्यं श्रुतीभक्षमुदाहृतम्। ऋतौचमैथुनस्यर्मंम् पुत्रोत्पत्तिनिमित्ततः। स्वर्गंप्राप्नोतिनेत्तंतु प्रत्यवायेनयुज्यतइति। तस्मात्प्रोक्षितादिचतुर्षु स्मृत्युक्तसंकल्पेन मांसत्यागिनामपि गृहस्थानाम् भक्ष्यमेवमांसमितिनदोषः। अविहितसंकल्पेन तत्त्यागिनान्तु प.श्वादिभक्षणेप्यदोषः। रोगार्तानामभ्यर्थितानांच ब्रह्मचारिणाम श्रा.द्धादिष्वपिभक्षणे महांदोषएवेनि। अतस्त्यक्तमांसादेरपि श्राद्धेभक्षणमेवोचितमित्युक्तम्। तथाचोशना। नियुक्तस्तैव यःश्राद्धे यतिश्चेत्परिवर्जयेत्। पितरस्तस्य तन्मासम् नैराश्यंप्रतिपेदिरे। देवलोपि। नियुक्तस्तुयदिश्राद्धे दैवेमांसं समुत्सृजेत्। यावंतिपशुरोमाणि तावन्निरयमृच्छति। स्कंदे खरसंवादेपि। निवेशितस्तु यःश्राद्धे यज्ञे वापिद्विजाधमः। मांसंनाश्नातिनिरयम्। यातिवैमशतांनरकृत्यलं व्हुना॥ एवमन्नंसंकल्प्यापोशनम् दत्वोंकारव्याहृतिपूर्वंगायत्र्यादि जपेत्। तथाच याज्ञवल्क्य। सव्याहृतिकांगायत्रींमधुवाताइतितृचम्। जप्त्वायथासुखंवाच्यं भुंजीरंस्तेपि वाग्यताः केचित्तुमधुमक्षितिविजर्पवारिधारांचनकुर्वंति। तन्न। उभयोरपिविधानात्। तथाचप्रचेताः। आपोशानंमदत्वाथसर्वा-वीं तिर्जपेदथ। मधुव्याताइत्तृवमक्षिस्त्वेतत्त्रिकन्तथा। स्कांदेपि। आपोशानमथोदत्वा वारिधारांक्षिपेद्बुधः। नमोदेवे भ्यइतिचसव्ये नोदङ्मुखोद्विजः। अपसव्यम्पितृभ्यस्तुइत धारांवदेत्स्वधामिति। एवंजप्त्वाऽक्षिकीकरणं कृत्वायेदेवासः येच हेत्यादिपठित्वा यथासुखमश्नंतं जुप-

ध्वमित्युक्त्वाभोजयेत्। तथाचयमः। अन्नहीनंक्रियाहीनं मंत्रही-नंचयद्भवेत्। सर्वमच्छिद्र मित्युक्त्वाततोयत्नेनभोजयेत्। कात्यायनः। येदेवासश्चयेचे इमन्त्रद्वयमुदीरयेत्। मन्त्रान्तेहुततोब्रूयादमृतं भुज्यतामिति। पूर्वोदिते उत्तरस्यापत्रा इतिविवेकः। इदयास्वस्तक्त्योपि। यथासुखजुषध्वंभोइति वाच्यमनिष्ठुरमिति। भूतबलिदानमित्येके। नेत्यन्ये। एवंचवैश्वदेवेबलिः पित्र्येऽन्यविरोधः। तथाच। स्पर्शनान्तेऽथशेषन्न स्थण्डलेनांतिवलिंहरेत्। ॐमस्तुमधुवातेति ॐमांस्तउदकंपिवेदिति वैश्वदेवविषयम्। अत्रिः॥ दत्तेवाथयदाऽदत्ते भूमौयोनिक्षिपेद्बलिं तदेतन्निष्फलंयाति निराशैःपितृभिर्गतैरिति पित्र्यविषयम्। पितृणामन्नमुत्सृष्टं बलिंकुर्वंतियेद्विजाः। आसुरंतद्भवेच्छ्राद्धम पितृणांनोपतिष्ठत इतिविशेषात्॥

मू॰ अग्नंस्तुजपेद्व्याहृतिपूर्वां गायत्रींऽं सप्रणवाऽंसकृत्त्रिर्वा रक्षोघ्नीःपित्र्यमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणि॥७॥

सप्रणवांव्याहृतिपूर्वां गायत्रीमित्यन्वयः। पाठोऽर्थेन-वाध्यते। वाशब्दस्तुविकल्पार्थः। अशनात्पूर्वंत्रिरत्नंतुच सर्वदितिव्यवस्थार्थोवा। पूर्वस्यादृष्टोपदृष्टत्वात्। तथाचमर्चताः। आपोशानमथोदत्त्वासावित्रींत्रिर्जपेदथ। मधुवाताइति त्र्चं मध्वित्येतत्त्रिकन्नयेति। चक्रहलायुध; सकृत्त्रिर्वामधुमतीर्मधुमध्विति चेतिपाठइति तत्कर्कादिभिरनादृतत्वात्तत्त्वदस्याशनात्पूर्वं विधानाच चिन्त्यम्। रक्षांसिघ्नन्तीति रक्षोघ्नीमूलविभुजा-

खमापि परमन्नस्तथा विप्रदक्षिणा नैव स्वस्तिवाचनकं विना पि-
त्र्यमन्यत्कर्तव्यम् प्राचीनावीतिना सर्वमिति अत्र यद्यप्यग्नौ स्वस्तिमतो सागा
न्येनोक्तं तथापि यथोपदेशं कोष्ठव्यं तथाच प्रचेताः पीत्वापोशानमश्नी
यात्पात्रे दत्तमगर्हितं सर्वेन्द्रियाणां चापल्यं न कुर्यात् पाणिपादयोः
बौधायनः पादेन पादमाक्रम्य यो भुंक्ते नापदि द्विजः नैवासौ भुञ्जते श्राद्धं
निराशाः पितरो गताः प्रचेताः भोजनन्तु निःशेषं कुर्यात् प्राज्ञः
कथञ्चन अन्यत्र दध्न क्षीराद्वा क्षौद्रात् सक्तुभ्य एव च शेषत्यागस्य नित्य
त्वात् तथाच जमदग्निः भुक्त्वा पीत्वा तु यः कश्चिद्रिक्तं पात्रं समुत्सृजेत्
स नरः क्षुत्पिपासार्तो भवेज्जन्मनि जन्मनि जनिन्द्येषु भोजनेषु रिति
तु अधिकोच्छिष्ट याग विषयं तत्रान्येयासमावन्तु यो विप्रो न त्यजेत्त-
दा यक्ष्ये पिण्डदानादौ तद्धि रक्षांसि भुञ्जते इति वाक्यात् मनुः अ
त्यर्ण्णं सर्वमन्नं स्यादश्नीरंश्चैवाग्यताः न च द्विजातयो ब्रूयुर्दातृपृ-
ष्टा हविर्गुणान् वाग्यता इत्यादिनैव वाचकमर्थ नब्रूयुरिति इत्यसं-
ज्ञया प्रकथनार्थं हुंकारेणापि नो ब्रूयादस्तेन पि गुणान्वदेदितिश्च-
वणेन प्रतिषेधात् ब्राह्मसमाताविदं ज्ञेयम् निहत्ते तु तथा श्राद्धे न-
त्व्य शेषमन्नं हविरितिवाक्यात् भोक्तॄणां निषेधाद्दातातु हविःप्रशं-
सनीयमेव वच्यु त्पादनार्थं भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणा-
न्छलैः पुनरपूरकवसवेदाकुर्याद्देशः प्ररोचनामिति अश्रीरंश्चैवे-
त्येवकारः परस्परस्पर्शस्य दोषत्वसूचक तथाच शंखः श्राद्धपंक्तिषु भुं-
जानो ब्राह्मणो ब्राह्मणं स्पृशेत् तदन्नमत्त जन् कुर्वागायत्र्यष्टशतं
जपेत् कात्यायनोऽपि एकपंक्त्यौ भुक्तौ तु यो नो विप्रो पिस्पर्शयेद्यदि तदन्न-
मत्यजे कृत्वाग्यायत्र्यष्टशतं जपेत् हारीतः पात्रे पात्रं प्रतिष्ठाप्य ये ऽ
श्नानाः भुंजते द्विजाः आसुरं तन्नविर्ज्ञेयं ब्रह्म नित्यं प्राणोपतिष्ठते मार्क-
ण्डेय. कटिभुग्नस्तु यो भुंक्ते न तजानुकरस्तथा हसते वदते चैव निरा

शा:पितरोगता: शंखलिखितौनचात्यंताधिकन्द्या न्नप्रतिगृह्णी यादिति दातृधर्ममाह्णं ख. श्राद्धे नियुक्तोभुंजानो न्नपृच्छेल्लवणादिषु उच्छिष्टा:पितरोयांति पृच्छतोनात्रसंशय: दातु;पततिवेवाहुर्जिह्वा भोक्तुश्चभिद्यते नन्विटव्यंजनादिभोक्तायाचेतनवेति उभयवाक्यदृष्टे: तथाचउशनातातप: अपेक्षितंयोनदद्या च्छ्राद्धार्थमुपकल्पितम् नयाचतेस्मृतोमूढ: सभवेद्ब्रह्मघातकइति वायौनिषेध: याचलेयद्दातारम् ब्राह्मणोज्ञानदुर्बल: पितरस्तुनतृप्यंतिदातु र्भोक्तुर्नसंशय: तथा क्व कृच्छ्रादशरात्रेण मुच्यतेकर्मणस्तत:तस्माद्विद्वान्नेवदद्या न्नयाचेतनदापयेत् इति अन्यत्र नपंक्तौविषमंदद्या न्नयाचेतनदापयेदितिश्चत्रविरोधे उपकल्पित याचानलनुपकल्पितस्येत्यविरोध: यम: यावदुष्णंभवति यावदिष्टंप्रदीयते तावदश्नंतिपितरो यावन्नाहददाम्यहं अहंददामीति यावन्नाहतावदश्नंतीत्यर्थ: एतच्चापेक्षितविषयं अपेक्षितंयोनदद्यादितिवाक्यात् ननु मौनस्थोक्ते: कथंयाचनंहस्तादिसंज्ञानिषेधात् उच्यते हस्तादिसंज्ञानिषेधा हविर्गुणाख्यानविषयो नतुयाचनादिविषयइत्यविरोध. तथाचनिगम: नान्नपानादिकश्राद्धे वारयेन्मुखत. क्वचित् अनिष्टत्वाद्भुक्तत्वाद्वा वारणंहस्तसंज्ञया देवलोपि अन्नपानक शीतोदकभ्योभ्यवलोकित: वक्तव्येकारणेसंज्ञांकुर्वीतीजितपाणिनेति दाता व्यंजनादिकमादा यावलोकितवक्तव्येहस्तेनसंज्ञांकुर्यादित्यर्थ: ।

## मू० तृप्तान् ज्ञात्वान्नम्प्रकीर्य ॥ ८ ॥

ब्राह्मणान्तृप्तान्ज्ञात्वासर्वान्नमुदके नाग्नाव्याग्निदग्धेत्यनेनमकिरेदित्यर्थ: तथाचयाज्ञवल्क्य: सार्ववर्णिकमन्नाद्यं संपृक्त्या

ल्लाञ्चनारिण ममुत्सृजेद्भुक्तवतामग्रतोविकिरन्भुवि सार्ववर्णिकं
सर्वव्यंजनसङ्घितम् असंस्कृतभागत्याद्विकिरेदन्नौदनमेवेतिक-
ल्पितन्न यदन्नं पिण्डदानेषुतदन्नं विकिरेव्ययसेदिति इत्याद्य-
वलक्षोक्तेः अल्पमेवान्नं नविकिरेदितिदृष्टान् इ।वेत्युक्तम् स्मा-
स्वादिष्टानांस्ततो विप्राग्रकुर्याद्विकिरासनमिति दक्षिणाग्रंचा-
न्नादिग्रहणेनाहारानुमानेनचप्रतिपन्नम् इत्यद्राप्यवर्यिच्छु-
क्तमयापिप्राद्देशपरिमाणांस्तत्वं तराक्षोभ्यं तथाह्याज्ञवल्क्यः
विकिरंभुविदातव्यमुच्छिष्टेभ्यः षडगुलम् पठंतिच उच्छिष्टस्यो-
त्तरे देशे पिण्डान्दद्यात्षडङ्गुलमिति यत्तुपुराणसमुच्चये विप्रदे-
वपितॄणांच अंतरेतुनिपेत्कुशान् तत्रावकिरणं कुर्याद्गाथा-
मेतामुदीरयेत् यच्च तत्समंविकिरन्दत्ताद्देवं द्वांतरेभुवीति-
द्विजाग्र्यानबोधकमित्यविरोधः भुक्तवतामग्रतइति योगीशो-
क्तेः नन्वस्यविकिर मंत्रकत्वादिकीर्येतिवाच्यं नप्रकीर्येति उच्यते
विकिरंविनाश्राद्धं व्यर्थमितिप्र शब्देनयोतितनित्यदोषः तथाचगो-
भिलः विकरेणविनाश्राद्धम् निष्फलंपरिकीर्तितम् एकोद्दिष्टे वि-
शेषेणप्रेतश्राद्धे प्रवर्जयेदिति योमोहात्कुरुतेश्राद्धम् विकिरेणवि-
नाक्वचित् तत्सर्वंव्यर्थतांयाति पितृपिण्डोदकादिकमिति अथसंश-
यः किमपिण्डश्राद्धे विकरःस्यादुतनेति उभयथाप्यदृष्टेः तथाहि
पिण्डनिर्वापरहितंयत्तुश्राद्धं विधीयते स्वधावाचनलोपोस्तिविक-
रस्तुनलुप्यते तथा नचाग्नौकरणं कुर्यान्नार्घदानंकथंचन नपिण्ड-
कल्पनाश्राद्धे विकिरान्नं नचोत्सृजेदिति उभयशास्त्रत्वाद्विकल्पइ-
त्ता के यत्रपिण्डदानानिषेधवचनं देशकालादसंभवेनपिंडवर्ज
करोतितदाविकिरःस्यान्नतुयुगाद्यादिषुपिण्डदाननिषेधोत्ताने
तद्विचार्यं द्विविकरःप्रधानसंगत्वात्प्रधानस्यापिण्डमाधान्य

विरोधः अथाङ्गत्वेऽङ्गानांप्रधानानुरोधात्पिण्डाभावेतदभावइ-
त्यनाश्यं विकल्पनन्तुनविषयकृतेः तदुक्तं स्मृतिद्वैधेतुविषयः
पृथक्पृथगिति तस्माद्देशाद्यासम्भवेपिण्डाभावेपिविकिरेतपिण्ड-
निषेधेपीतिसुस्थं तथामोक्षेश्वरनिबन्धे मघायुगादिभरणी श्र द्वे
पिण्डंविवर्जयेत् अन्नेजनपूजान्तमुत्सुकान्तरणानिच निःशेषम-
ग्नौकरणम्विकिरञ्चषडंगुलमिति तस्माद्युगादिषुपिण्डनिषेधे आ-
वाहनाग्नौकरणविकिरवेद्यादि पूजान्नस्वधावाक्यादीनांनिषेधः
सिद्धः विकीर्याचमेत् तथाचमरीचिः श्राद्धे पुविकिरन्दत्वायोना-
चामतिवैभ्रमात् पितरस्तस्यपणासभवन्त्युच्छिष्टभोजनइति ।
तथा विकिरेपिण्डदानेच तर्पणेभोजनेतथा वृतेयाचमनंप्रोक्तम्
दर्भत्यागोविधीयते अवानग्निदग्धाइत्ययंपाठः येषांदाहोनक्रियते-
येग्निदग्धास्तथापरइतिब्राह्मणवाक्यात् ॥

## मू० सकृत्सकृदपोदत्वापूर्ववद्गायत्रीञ्ज-पित्वामधुमतीर्मधुमध्विति च ॥ ६ ॥

विप्रेभ्यस्तु कार्यसकृत्सकृदपोदत्वा पूर्ववत्सप्रणवव्याहृतिगा-
यत्रींसकृत्त्रिर्वामधुमतीर्मधुमध्विति जपेदित्यर्थः तथाच मार्कण्डे-
यः ततस्त्वाचमनार्थाय दद्याच्चापःसकृत्सकृदिति वीप्सापिञ्च
दैवद्विजार्था अपोदत्वागायत्र्यादि जपदर्शितकश्च तथाचगोभिल-
सूत्रम् अङ्गुष्टमन्ने विधाय सकृत्सकृदपोदद्यादिति मधुशब्दोवै
यामुतामधुमत्यो मधुवाताइत्याद्यृचः मधुमध्विति द्विरुच्चारणं
मन्त्रप्रदर्शनार्थम् संहितायांमधुमधुमध्वितिप्रवर्षमन्त्रदृष्टेः देव-
पूर्वंसन्दानमित्यर्थे के तन्नपितृपूर्वविधिः तथाचविष्णुः उदङ्मुखेष्वा
चमनमादौ ततःप्राङ्मुखेषु दद्यादिति त्रिसर्गस्थलुकस्याग्नौ कर-
णम्पङ्क्तिपावनम् करशुद्धिरपोशानं पितृपूर्वाणिषट्स्मृदेत्युक्तम् ॥

## मू० तृप्ताःस्थेतिपृच्छति ॥ १० ॥

अनन्तरन्तृप्ताःस्थेतिब्राह्मणानृपृच्छेदित्यर्थः अत्रपङ्क्तिमूर्द्धन्यम्रश्नेतृप्ताःस्थेति वहुवचनम्पूजार्थमित्येके तन्न प्रतिवचनेबहुवचनानुपपत्तेः नचाग्नौकरणादिष्विवावैकस्यप्रश्ने दृष्टार्थत्वं तस्मात्पङ्क्तिमूर्द्धन्यंपृच्छति सर्वान्वेत्यनव्यवस्थित विकल्पइत्युक्तं । अतः सर्वेप्रष्टव्याइति तथाचयमः यथाब्रूयुस्तथाकुर्या दनुज्ञातस्तुतैर्द्विजैरिति ननुभोक्तृविप्राणां वमनेकिंश्राद्धम् समापनीयम नवा तत्रसमापनीयमित्येके तन्न स्मृतिविरोधात् तथाच हेमाद्रिकल्पे अकृतेपिण्डदानेतु ब्राह्मणोवमतेयदि पुनःपाकंप्रकुर्वीत श्राद्धं कुर्याद्यथाविधिः धर्मप्रदीपेपि अकृतेपिण्डदानेतु भुंजानोब्राह्मणोवमेत् पाकंकृत्वापुनःश्राद्धं कर्त्तव्यन्तुयथाविधीति अकृतइत्यत्रपादाना त्कृतेसमापनमितिचेन्न वमनस्यश्राद्धविघातकत्वात् अतोऽपरेद्युरेवपुनःश्राद्धमितिसिद्धम् तथाचस्मृतिः वमनेवाविरिक्तेवा-वांतद्दिनंवर्जयेदिति नचैतन्निमन्त्रणोत्तरंश्राद्धात्प्राग्वमनविषयं श्राद्धविघ्नेसमुत्पन्नेअन्तरामृतसूतके वदन्तिशुद्धेतत्कार्यं दर्शे वापिनिवलणइत्यु त्तरेद्युर्विधानात् अत्रप्रायश्चित्तमित्येके पठंतिच पितृद्विजानांमध्येतुपितु श्चवमनंयदि तद्दिने चोपवासश्चपुनःश्राद्धं परेहनि सर्वमन्नंनमस्तायमन्त्रैःप्राणादि पञ्चकैः द्वात्रिंशदाहुतीर्हुत्वाशेषंकर्मसमाचरेदिति ।

## * तृप्ताःस्मइत्यनुज्ञातःशेषमन्नमनुज्ञाप्य ।११।

ततस्तृप्ताःस्मेतिद्विजैरुक्तेशेषमन्नं किंक्रियतामिति भोक्तृनृपृष्ट्वाइष्टैः सहभुज्यतामित्यनुज्ञापयेदित्यर्थः । एतदपि सर्वापेक्षंनपङ्क्तिमूर्द्धन्यस्यैव ननु श्राद्धोर्वरितपाकेएवशेषशब्दोनतुपाकान्त-

रेतत्कथम्पाकान्तरभुजितद्दानञ्चेतिचेन्न गृहसिद्धस्यसर्वस्यापि पितृशेषत्वेन दानभुज्युपपत्तेः । तथाचयमः भक्ष्यम्भोज्यन्तथापेयं यत्किञ्चित्पच्यतेगृहे नभोक्तव्यम्पितॄणांतदनिवेद्यकथञ्चनेति यतः शेषस्यापिपितृउद्देशेन दानमित्युक्तं ननु किंनिरग्नेरुल्मुकनिधानं स्यान्नवा उल्मुकस्यदक्षिणाग्निसाध्यत्वात्तदभावेतन्नेत्येके स्मार्ताग्नेः पिण्डपितृयज्ञविधानान्ननिरग्नेरित्यन्ये न देवताग्निशब्दक्रियाः । परार्थत्वादितिपरिभाषातोनिषेधादग्न्यंतरेण नस्यादित्यपरे निरग्नेरपिश्राद्धाधिकारान्निषादस्थपतीष्टिवल्लौकिकाग्निनेतिकेचित् एवंसत्युल्मुकनिधानमनियतमिति उच्यते यदुक्तन्दक्षिणाग्न्यभावे तन्नेति नतत् पिण्डपितृयज्ञवदित्यनेन स्मार्ताग्नेःप्राप्तत्वात् यच्चपिण्डपितृयज्ञस्यविधेर्निरग्नेर्न्नेति तदपिन प्रकरणे प्रत्यवायस्मृतेर्नित्यत्वं यत्तु नदेवतेत्यादिनाऽग्नेः प्रतिनिषेधभावइति तदपिपिण्ड पितृयज्ञवदित्यतिदेशात् लौकिकाग्न्युपादान वैयर्थ्यं स्यात् यच्च निषादस्थपतीष्टिवदविरोधइति तदपिन नित्यत्वानुपलब्धेः तस्माद्-गुणफलविधिरुल्मुकाधानं साग्निनिरग्न्योर्नित्यमितिसिद्धम् । तथाच वृद्धयाज्ञवल्क्यः । पितृरूपास्त्वसुराः पिशाचाराक्षसाश्चये तेषां वैरक्षणार्थायक्षिपेदग्नि न्तुनैरृते मण्डलेष्वग्निदाहंये नकुर्वन्ति द्विजोत्तमाः निराशाःपितरस्तेषां पैशाचंश्राद्धमुच्यते स्कन्देपि येरूपाणीतिमन्त्रेण न्यसेदुल्मुकमन्तिके शुष्कगोमयसंभृतं यावच्छ्राद्धं समाप्यते अजीर्णदोषनाशाय पितॄणामग्निवर्द्धनं श्रुतिरपि सयदिनिधायोल्मुकमथ तत्पितृभ्यो दद्यादिति ॥

**मू० सर्वमन्नमेकतोद्धृत्योच्छिष्ट समीपेदर्भेषु त्रींस्त्रीन्पिण्डानवनेज्यदद्यात् ॥ १२ ॥**

एकतोद्धृत्येतिच्छान्दसः सन्धिः सर्वशब्दः सूपाद्यपेक्षोनया व-

दाचक: उच्छिष्टसमीपद्वति सद्देशोपलक्षणं तथाचश्रुति: पितृणा-
मासनस्थाना दग्रतस्त्विरविनपु उच्छिष्टसन्निधानन्तन्त्रोच्छि-
ष्टासनसंनिधौ व्यानोपि भरत्निमात्रमुत्सृज्यपिण्डांस्तत्रप्रदापयेत्।
यत्तोपन्पृशतांवापि प्राप्नुवन्तिनविन्द्वद्वति यथायोग्यं विकल्पोत्र-
विकिरपिण्डविवक्षया सनस्थानादुच्छिष्टस्ततो विकिरस्तत.पिण्डा
वाविरत्निव्यवस्थावा व्याममात्रं समुत्सृज्य पिण्डांस्तत्रप्रदापयेदिति
जातूकर्ण्योक्ति: पैतामातामहविषया अवनेज्येतिस्वार्थेणिच् द-
द्यादिति गोत्रादिप्रकाशकन्ततश्च सर्वान्नमेकपात्रे उद्धृत्यपत्न्या
पिण्डान्कारयित्वा यथोक्तदेशेवेदादिकृत्वा पृथक्पृथगवनिज्यद-
र्भेषुयथोपदेशंपिण्डान् दद्यादित्यर्थ: तथाच स्कंदे अपसव्यंवाम-
जानु पातपूर्वंपडानन मन्त्रोपिण्डांस्तुमृद्नीयाविसर्गस्तुसदायि-
नीति यद्ययवसामान्येनसर्वं मन्नमित्युक्तन्तथापि निर्मायंबोध्यं
तथाच हरशास्त्रवल्क्य: माषान्सर्वत्रनैवेद्यपिण्डेर्मौचयिवर्जयेत्-
यथामद्यंतथामाषा निविद्धाश्चाग्निपिण्डयोरिति अत्रसंग्रह:
पिण्डपितृयज्ञव दित्यनेनप्राप्तेषु द्वावनेजनपिण्डेषुपुन स्तद्ग्र-
हणं कृतद्वति तथाच पिण्डपितृयज्ञमूत्रम् तद्दक्षिणोनोल्लिखनम्-
पहंताद्स्यपरेणोल्मुकम् पुरस्तात्करोति येरूपाणोत्युदपात्रेणा-
वनेजयत्यसव्यएसव्येनवोदरयसामर्थ्यां दत्तावनेनिक्ष्वेतियज-
मानस्यपितृप्रभृतित्रीनुपमूलएसकृदा च्छिन्नानि लेपादांकृत्वा
यथावनिक्तम् पिण्डानद्दात्यसावेतत्त इत्यादि अत्रैके पिण्ड-
यज्ञेलेपमा निजा दर्भेषुपिण्डदान निषद्दर्भेत्वे वावनेजन मि-
त्येतदर्थमिति । तथाच अप.चिपेन्मूलदेशे वनेनिक्ष्वेतिपावत:
द्वितीयंचतृतीयंच मध्यदेशाग्रदेशयोरिति उपलक्षणपरमित्यन्ये
उपलक्षणे उपदग्रहणानुपपत्ति: परिसंख्यानेवावनेजादर्भेषु द-

दद्यादितिसूत्रादिनिहत्य च उच्छिष्टसामीप्योपदेशादन्नपरिसंस्थेति-
कर्कः एवंच कथमियंपुनरुक्तिरिति उच्यते यदुक्तकुशोपर्यवने ज-
नार्थंतदिति तन्न तादृशावनेजनस्य छन्दोगविषयत्वात् तथाच-
तत्परिशिष्टं प्रागग्रेष्वथदर्भेषु आद्यमामन्त्र्यपूर्ववत् अपःक्षिपेन्मू-
लदेशे अवनेनिक्ष्वेतिनिस्तिलाः इति प्रागग्र नस्तिलत्वे इति विषये
नचतथाशंक्यम् अवनेनिज्य दर्भेषुदद्यादित्यन्वयभावात् तथाच पि
ण्डयज्ञसूत्रम् अमात्रनेनिक्ष्वेत्यादि कम् स्कन्देपि नामगोत्रे सम्यु-
च्चार्यपूर्वदद्यादवनेजनम् कुशैरास्तरणंकुर्याद्दक्षिणाग्नेस्तुतत्परम् द्वि-
गुणांस्तुकुशान्दत्वा सतिलानर्घसंयुतान् अवनेनिक्ष्वचोक्त्वाथ कु-
शान्भूमौपरिस्तरेदिति यत्तु पक्षत्रयपरिसंख्ये इतितद्द्वयमपि छ-
न्दोगविषयेनैवदूषितमित्युपेक्षितं नहुतशेषं वेद्यादिकरणोपपत्तेः ।
तथाचदेवलः मण्डलञ्चतुरस्रञ्चदक्षिणावर्तकामवत् एकदर्भेणत-
न्मध्ये उल्लिखेच्चिश्वतंत्यजेत् ब्रह्माण्डेपि रुद्धोद्धाराभ्यांपाणिभ्याम्
कुर्यादुल्लेखनंबुधः यजुर्भाष्यकृतार्कोपि पाक्षिकेत्तुमन्त्रोल्लिख इति
यच्चहस्तायुधे नपिण्डयज्ञे यत्पिण्डदानमित्युक्तम् तस्यैनस्याया-
परिज्ञाता द्विषयांतरानुपलब्धेश्चायुक्तम् । पिण्डयज्ञावदुपचार इ-
त्यनेनैवतत्सिद्धेः तस्माद्विषयांतरबोधनेनापुनरुक्तिः । तद्यथा
पिण्डयज्ञवदित्तिदेशेपिमार्गेननिरग्नेः रजिंद्रष्टव्यापिनिर-
ग्नेर्विषयांतरदृष्टेः साग्निपरएव तस्यसर्वांगोपसंहारात् निर-
ग्नेस्तु हस्तारनौकरणादिविषयांतरदर्शनात्तदर्थे तत्स्वमि-
त्यपुनरुक्तिः अतोनिरग्नेरुपमूलनलूनत्वगादि निषेधार्थमिदंसू-
त्रमितिसिद्धम् । तेननिरग्नेर्यानदादिषु मूललूनत्वगादिकरणम्
त्सहदेवानावनेजनम् एतच्चान्त्यं पार्वणविषयम् तस्याश्वयधः तथाच श्रु
तिः साग्नेरामनाः सम्मूलता पिण्डेषु सकृदाच्छिन्नेतिकिंच सह-

स्तुभवेद्दर्भ इतिप्रागुक्तम् यत्तु शतपथे सकृदाच्छिन्नान्युपमूलंदि नानीत्युक्तम् तदपिसाग्निपरमेव सुमन्तुरपि असाववनेनिक्ष्वेति पुरुषंपुरुषंमति त्रिस्त्रिरेकेनहस्तेन विद्धीतावनेजनम् अपसव्येनहस्तेन निर्वपेदुदकंसुधीतिमनूक्तेश्च तथा श्राद्धेपिण्डेविवाहेपु दानेचैकेनदीयते तर्पणेतूभयेनैव जलन्देयन्तुनान्यथेति धर्मप्रदीपेपि गयायांदशपिण्डेच पिण्डशब्दोविधीयते अत्यचनान्नशब्दःस्यादगंगादिषुसरित्सुच महालयादिसमुच्चायकश्च । तथाचहेमाद्रौ महालयेगयाश्राद्धे प्रेतश्राद्धे दशाह्निके पिण्डशब्दप्रयोग,स्यादन्नमन्यत्रकीर्तयेदिति असावेतत्तइतिशुश्च्या सूत्रकृतावेतत्तइत्युक्त्वा वाजसनेयिनाम् पिण्डेपुक्तोत्रप्रयोगः सर्वत्रत्येके पिण्डशब्ददर्शनादेतत्तेपिण्डःस्वधेति सर्वत्राप्यभिरयन्ये तदयमपिविपयादर्शननिमित्तमितिबोध्यम् तस्माद्विहिते पिण्डशब्दस्तद्भिन्ने ऽन्नशब्दइतिसिद्धम् यदिस्मृतिविरोधमिथैतस्मिन्विपये विचिकित्सातर्ह्येतत्ते पिण्डान्नंस्वधेत्यस्तु तथाचश्राद्धकल्पलतायां एतत्तेपिण्डान्नमित्यर्जवङ्गना एतत्पिण्डदानमेकश्वासेनकार्य यावदेवोच्चरेन्मन्त्रन्तावत्प्राणान्निरोधयेदित्युक्तः ननुकिंपिण्डर्पणक्रमः प्रागपक्रमाः प्रत्यगपक्रमावा तत्रपश्चाद्दारागेमुमावादिवर्गोर्थमित्याद्यसंयगृह्या स्तीभ्यश्चपिण्डाद्दृपश्चिमास्युरिति भाष्यार्थसंग्रहकृदाक्यात्पश्चिमसंस्थाइति तथा पिण्डात्पश्चमेन तत्पत्नीनाम् किञ्चिदुत्तर्षायेति शांखायनगृह्यादपीति पितृकर्मत्वा त्पत्नीनांप्राक्संस्थत्वानुपपत्तेः प्रत्यक्संस्थातैवेत्यन्ये उच्यते यदुक्तप्रागुपक्रमा इति तत्रतथासति पितृकर्मणि प्रदक्षिणोपचार स्यात् । पितृणामप्रदक्षिणमित्यादि वाक्यवैयर्थ्यापत्तेश्च द्वितीयेपिसएवदोषः नचेवमिष्ट प्रत्यगुपक्रमाःप्रागपवर्गाः पितरमातृणांसंस्थाभवन्ति

दक्षिणादिगुपक्रमादुदगन्ताएववावैश्वदेवद्विजसंस्थाभवन्तीतिनिर्धारणेन ब्राह्मणोपवेशस्थस्तरपंक्तीनामपि तथैवव्यापित्वात् अन्यथावैषम्यःक्रमोपपत्ते, सदाचारादपि प्राक्संस्थैवेति यत्वापस्तंबादिगृह्यादयम् यच्चअग्नेर्दक्षिणादेशेतुस्थानंकुर्वीतसैकतं मंडलंचतुरस्रंवादक्षिणावनतंतथा तत्रस्थानेततोदर्भानेकमूलान्सितान्वहन् दक्षिणाग्रानुदक्संस्थान्द्विधा तांस्तृणुयात्समं पूर्वभागस्थदर्भेषु पितृपिण्डान्विनिक्षिपेत्। पश्चात्स्तृतेषुदर्भेषु मातृपिण्डान्विचक्षणादितिष्टवशिष्टवाक्यम्। तत्तच्छाखिनामेवत्यविरोधः अथकिंपिण्डप्रमाणंनियतम् नवा तत्रकपित्थबिल्वमात्रांश्च दद्यादामलकैःसमान् कुक्कुटांडप्रमाणान्वा बदरेणसमानथ नालिकेरसमानन्यपि अधिकान्नप्रदाप्रदेत् ममाग्नमेतत्पिण्डाना मंगिरासुनिरब्रवीदित्यनेन विकल्पादनियतमिति चेत्तन्न अस्यवाक्यस्य आवृत्तिविशेषविषयत्वेन व्यवस्थितेः तथाचमरीचिः आर्द्रामलकमात्रांस्तु पिण्डान्कुर्वीतपार्वणे एकोद्दिष्टेबिल्वमात्रम् पिण्डमेकन्तुनिर्वपेत् नवश्राद्धे स्थूलतरम् तस्मादपिचनिर्वपेत् तस्मादपिस्थूलतरमाशौचे प्रतिवासरमिति अथैकेपिण्डदानंकेवलपिण्डैरेव नभुग्नकुशैरिति तन्न अंशभागिपत्नीनाङ्कुशैरेवस्थवणतर्धानोपपत्ते, तथा। श्वशुरस्यापतीयस्मा च्छिरःप्रच्छादनक्रिया पुरैदर्भैर्गसाकार्यो मातुरश्वुरयार्थिभिरिति मात्स्येपि ततःकृत्वांतरेदद्या त्तपत्नीभ्यःकुशान्वुधइति।

## मू० आचांतेष्वित्त्याके॥ १३॥

एकत्रश्राम स्वस्वशाखोक्त विज्ञापनार्थ मुनिभिर्भिन्नकालेष्व पिण्डदानेष्वनन्तरम् तत्स्वशाखागतं यत्तत्तत्कुर्याद्विचक्षण-

इतिशास्त्रात् संग्रहकारोऽपि यान्यनेकालभेदेन कर्माणि शुनयोज-
गुः स्वस्वगृह्यानुसारेण विकल्पन्तेषु मुञ्ज्यतइति ततश्चाचान्तेषूद्धि-
जेषु पिण्डदानमित्येकेऽजगुर्नैकात्म्यायनइत्यर्थः विकल्पएवायमि-
तिकर्कोदयः ननुकिंलेपभुजान्दर्भमूलेषुदर्भाग्रेषुवादानमिति दर्भ-
मूलेलेपभुजः प्रीणयेल्लेपघर्षणैरित्यादिवाक्यान्मूलेष्वित्येके तन्न
लेपभाजश्चतुर्थाद्याइतिमात्स्यवाक्येनचतुर्थपुरुषादीनांलेपभागि-
त्वेन दर्भमूलेवैपर्य्यापत्तेः. मार्कण्डेयोऽपि लेपसम्बन्धिनश्चान्येऽपि
तामहपितामहादिति नन्वेवन्दर्भमूलेलेपभुजइत्यर्थक मितिचेन्न
तस्यकरघर्षणविषयत्वात् तथाचविष्णुः दर्भमूलेषुकरावघर्षणमिति
अतोदर्भाग्रेषुलेपभुजांदर्भमूलेकरप्रोञ्छनमित्यविरोधः तथाचवृद्धया-
ज्ञवल्क्यः दत्तेपिण्डेततोहस्तन्निर्मृज्याल्लेपभागिनां कुशाग्रेसम्प्रदा-
तव्यंप्रीयन्तांलेपभागिनइति तथा उत्तरेकुशमूलन्तु पितृमूलन्तुदक्षि
णेकुशमूलेषुयोदद्यान्निराशाः पितरोगताः दद्यात्लेपभागिभ्यः पि
ण्डानामग्रतः सदा प्रपितामहेचयोदद्यात्तृप्तिः पञ्चदशाब्दिकीति ।

मू० आचान्तेषूदकम्पुष्पाण्यक्षता नक्ष-
य्योदकञ्च दद्यात् ॥ १४ ॥

(१) शास्त्रान्तरोक्तमन्त्रैरुदकादिदानार्थञ्च तत्पुराणे । अपां-
मध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितं ब्राह्मणस्यकरेन्यस्ताः शिवा आ-
पोभवन्तुमे इत्युदकदाने लक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे
लक्ष्मीर्वसतिगोष्ठेषु सौमनस्यन्ददातुमेइति पुष्पादिदाने अक्षत-
ञ्चास्तुमेपुण्यं शान्तिपुष्टिर्धृतिस्तुमे यद्यच्छ्रेयस्करंलोके तत्तदस्तुस-

(१) ब्राह्मणेषुकृताचमनेषुसत्सुतेभ्यउदकादिकन्दद्यात् पुष्पाणिचात्रनिषिद्धा
नि । पद्मोत्पलमल्लिकायूथिकाशतपत्रचम्पकादीनिगन्धरूपसम्पन्नान्यपिदद्यात् ॥

दाममेत्यत्र तद्दाने एतद्यज्ञोपवीतिना कार्यं आशीरूपत्वात् तासु-
प्रोक्षितादियत्कर्म तत्कर्तव्यं यवादिना सव्येनेत्यर्थः । तथा विसर्जनं
सौमनस्यमाशिषः प्रार्थनं विना पित्र्यमन्यत्कर्तव्यम्प्राचीनावीति-
नासदेत्युक्तं अनाचान्तेष्वित्यनुवृत्तौ पुनस्तद्ग्रहणं वेद्यादिसंब-
न्धान्न पिण्डप्रयुक्तं कर्माचमनात्प्रागेवेति ज्ञापनार्थं अतो नाचान्तेषु
तत्सर्वं कृत्वाचान्तेषूदकादि दत्त्वा अक्षय्योदकं दद्यादित्यर्थः । तच्चो-
क्तं पिण्डपितृयज्ञसूत्रे तथाच पिण्डान्ददातीत्युपक्रम्यात्र पितरइ-
त्युक्त्वोदङ्मुख आतमनाऽमीमदन्तइति जपत्यवनेज्य पूर्ववन्नीवीं-
विस्रंस्य नमोवइत्यञ्जलिं करोत्येतद्व इत्युपास्यति सूत्राणि प्रतिपि-
ण्डमूर्णादशांवावपत्युत्तरे यजमानस्त्वलोमानियोर्जंमित्यपो निषि-
च्यावधायावजिघ्रति यजमानउल्मुकसहदाच्छिन्नान्यग्नावाधत्त-
इति मध्यमंपिण्डंपत्नीप्राश्नातिपुत्रकामेति अस्यार्थः । पिण्डान्द-
त्वाचम्य यवानादायात्रपितरइत्यादि हपायध्वमित्यन्तंमन्त्रञ्जपित्वा
प्रदक्षिणंवामेनावृत्त्योदङ्मुखो यथाशक्तिश्वासमनुरुध्य शुभन्ध्यायेत्
तथाचपरिशिष्टे वामेनवर्तनं केचिदुदगन्तुंप्रचक्षते स्कांदेपि प्रधा-
स्यहस्तावाचम्य शुभन्ध्यायेदुदङ्मुखइति शुभध्यानंसव्येनेत्येके तन्न
मानाभावात् आवृत्त्यैवेति नैव प्रदक्षिणमावृत्त्यामीमदन्तेतिमन्त्रं ज-
पित्वाचतान् भुविपिण्डमूले क्षिपेदित्यर्थः प्रदक्षिणमथावृत्त्य पूज-
येदक्षतैर्यवैरितिवाक्यात् पितॄंश्चमनसाध्यात्वा ऽक्षतान्निक्षिपेद्भुवी
ति हययाज्ञवल्क्योक्तेश्च अवनेज्यपूर्ववदित्यत्र गोत्राद्युच्चारणेनेत्यर्थः
तथाच श्रुतिः अथोदपात्रमादायावनेजयत्यसाववनेनिक्ष्वे त्यत्रयज-
मानस्यपितरमित्यादि यत्तु तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदि-
तिवाक्यं यच्च हस्तान्त्ववारिणाकार्यं पुनरप्यवनेजनमितिस्कन्दवा-
क्यम् तदन्यशाखिविषयं इत्थंतुपूर्ववदवनेज्येत्यतिदेशात् अतिदेश-

न्नानीति साग्निपरमित्युक्तं एवं प्रडीपयुक्तमप्यर्चितं कृत्वा यह्नतीत-संकल्पेनधूपादिकंनिवेदयेत् तथाचस्कान्देमम स्यर्च्यधूपदीपनैवेद्या-नि निवेदयेत् प्रकुर्यादथसंकल्पंकृत्वाचयोदकंततइतिततःमुप्रो-चितमस्त्वित्यादिनोदकादिदत्वाचय्योदकंनतन्त्रेणदद्यात् तथाच कात्यायनः अचय्योदकदानन्तुअर्घदानवदिष्यते षष्ठ्यैवनित्यतत्क-र्कुर्यान्नचतुर्थ्याकदाचनेत्यतिदेशस्तत्वनिषेधार्थः अक्षय्यमस्त्विति-प्रोक्तः प्रत्येकम्पितृतःक्रमादितिशङ्खोक्तेः

सू० अघोराःपितरःसन्तुसन्त्वित्युक्ते गोत्रन्नोवर्द्धतांवर्द्धतामित्युक्ते दातारोनोभिवर्द्धन्तांवेदाः सन्ततिरेवच श्रद्धाचनोमाव्यगमद्बहु देयञ्चनोस्त्वित्याशिषःप्रगृह्य ॥ १५ ॥

इतिरायर्थे तेनस्मृत्युक्तमन्त्रदाशीः प्रार्थनमितिरले.कका-रणमित्यर्थः सन्त्वित्यत्रप्रतिवचनान्तरं प्रार्थ्यं तथाचस्कान्दे अघो-राः पितरःसंतुसन्त्वित्युक्तेपुनर्द्विजैः गोत्रन्तथावर्द्धतांतथेत्युक्त-स्ततःपुनः दातारोनोभिवर्द्धन्तांवेदाः सन्ततिरेवच श्रद्धाचनोमा-व्यगमत् बहुदेयञ्चनोस्त्विति अन्नञ्चनोबहुभवेदतिथींश्चलभेमहि याचितारश्चनः संतुमाचयाचिष्मकञ्चन इत्येताश्चाशिषः सर्वाः-श्चीयात्प्रतिभाषितमिति अयवेतिशब्दप्रकारेतेनतिलकमुद्रादि-पेत्वाशीः प्रार्थनंसव्येनपूजादिवत्कार्यमित्यर्थः तथाचवृद्धयाज्ञव-ल्क्यः ततश्चतिलकंकुर्यान्मन्त्रेणानेनयत्नतः मन्त्रश्चनित्यानुष्ठाने स्वादि प्रागेवदर्शितः अतश्चाशीः प्रार्थनम्पित्र्येप्येवयज्ञोपवीतिना-कार्यमितिप्रागुक्तंदचिणांदिशमाकांक्षन्याचेतेमान्वरान्पितॄनिति

मनूक्तेः देवलोपि अर्घ्यमर्घ्यमेवास्त्वित्युक्त्वा भूयः समर्चयेदिति मूर्द्धाभिषेकश्चार्घ्यदानात्प्रागित्येके ॥

मू॰ स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य्यस्वधांवाचयिष्यऽइतिपृच्छति ॥१६॥

स्वधावाचनीयाः न्युब्जोपरिस्थापिताः कुशाःपवित्राणितदधःस्थापितानि तेषांकृतप्रयोजनत्वादन्यपवित्राणिकार्याणीत्यन्ये तत्कर्कादिभिर्नैरस्तमित्युपेक्षितं ततश्चसपवित्रान्स्वधावाचनीयकुशानादायास्तीर्यस्वधांवाचयिष्येइति पङ्क्तिमूर्धन्यंसर्वान्वापृच्छेदित्यर्थः. नन्वेषामास्तरणंकिंपङ्क्तिमध्येआहोस्वित्तत्रपिण्डपुरस्तादित्येके तदन्तरालइत्यन्ये एतद्द्वयमपिन मानाभावात् अतः पिण्डोपरिसमास्तीर्यापिनिदध्यादित्यर्थः तथाचगोभिलसूत्रं स्वधावाचनीयान्पिण्डोपरिसमास्तीर्येति परिशिष्टेपि पवित्रान्तर्हितान्पिण्डान्सिञ्चेदुत्तानपात्रकृदिति नचास्यशाखान्तरविषयत्वं स्वधावाचनिकसर्वैःपिण्डोपरिसमाचरेदिति मात्स्योक्तेः स्वधावाचनीयेष्विति स्वधावाचनीयादित्यश्रूयमाणं तन्त्रागेप्रतिनिधिः कार्यइत्युक्तं मुख्यद्रव्येच्छापरत्वात् तथाचउत्तरसूत्रं स्वधावाचनीयेष्वपोनिषिञ्चतीति ॥

मू॰ वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तुस्वधेत्युच्यमाने स्वधावाचनीयेष्वपोनिषिञ्चत्यूर्ज्जमिति ॥१७॥

मालादिमनुद्धायकश्च पृथङ्निर्देशादतन्त्रता स्वधावाचनएवचेत्युक्तौ. वाच्यतामिति ॥

मू० उत्तानंपात्रं कृत्वायथाशक्तिदक्षिणान्दद्याद्ब्राह्मणेभ्योविश्वेदेवाः प्रीयन्तामितिदैवेवाचयित्वा ॥ १८ ॥

पात्रंन्युब्जं यथाशक्तीतिसमदक्षिणाविध्यर्थं ब्राह्मणेभ्यइति स्वत्यन्तरोक्तपित्रुद्देशव्युदासार्थं तेनात्रब्राह्मणोद्देशेनैवदक्षिणा दानमुक्तमदभिप्रेतं तथाचदेवलः आचान्तेभ्योद्विजेभ्यश्चप्रयच्छेदथ दक्षिणामिति पित्रुद्देशपक्षेपितृभ्यः प्रथमभक्तागतन्मनस्कः समाहितः सुस्वधेत्याशिषायुक्तोदद्याच्छक्त्या तुदक्षिणामित्यादिविष्णुपुराणादुक्तोन्यथाखिविषय; वाचयित्वेति कारितार्थनिर्देशाद्विश्वेदेवा. प्रीयन्तामितिब्रूतेतिद्विजान्प्रत्युक्तेषुमुक्तो ततथविश्वेदेवाः प्रीयन्तामिति ब्रूतेतिविप्रानध्येष्यविश्वेदेवाः प्रीयन्तामितितैरुक्ते पितृपूर्वंसव्येनदक्षिणांदद्यादित्यर्थः अतास्मत्पितुरमुकशर्मणोमुक सगोत्रस्यवसुरूपस्य श्राद्धप्रतिष्ठार्थं ममुकसगोत्रायामुकशर्मणे विप्रायेत्यादितुभ्यमहंसम्प्रददइतिप्रयोग, तन्त्रत्वेत्वस्मत्पितृणामितिबोध्यं पित्रुद्देशपक्षेत्वस्मत्पित्रे पितृभ्य इतिवेतिविशेषः । सतिलनामगोत्राभ्यांदद्या च्छक्त्यातुदक्षिणाम् स्वस्तिवाचनकं कुर्यात्पिण्डानुधृत्य भक्तितः इतिवाक्यात् सूत्रे यद्यपि दक्षिणामितिसामान्येनोक्तम् तथापिपितृदेवयो. रौप्यसुवर्णेवोध्ये कनकोक्तिः जरातातुपितृणांरजतंस्मृतमितिवाक्यात् अवसमंसादश्रुतत्वा दितिन्यायाद्दक्षिणादान सर्वेषांसममेवेत्येके दैवपूर्वश्राद्ध मित्युक्तेः पूर्वदेवेदक्षिणादानं पश्चात्पित्र्यइत्यन्ये पित्रुद्देशपक्षेदक्षिणा दा-

नमपसव्येन देवपूर्वश्राद्धमोड्डेशेतु सव्येनेत्यपरे अपसव्यंतुतत्रापि मत्स्योऽभिमवामीने इत्यादिस्मृतेः उभयशाखस्थासं कल्पादि-कमपसव्येन त्यागमात्रं सव्येनेतीतरे उच्यते यदुक्तं सर्वेषांदक्षि-णासमेवेतितन्न पात्रानुसारेण दक्षिणाविषयोक्तेः तथाच एकप-ङ्क्त्युपविष्टानांविप्राणाम् श्राद्धकर्मणि भक्ष्यं भोज्यंसमंदेयंदक्षिणा त्वनुसारतइति अनुसारतः पात्रविशेषानुसारेणेत्यर्थः यत्तुदैवपू-र्वंदक्षिणे ति तदपिन पितृद्देशएव दैवपूर्व मित्यस्यपर्यवसानः-न्नत्राह्मणोद्देशइति तथाचदेवलः दक्षिणांपितृविप्रेभ्यो दद्याद्दि-प्रेतत्तद्वयोरिति यदपिपित्रुद्देशे ऽपसव्येनब्राह्मणो द्देशेसव्ये-नेति तदपिन पितृपूर्वकस्यसव्येनैवोक्तेः तथाचसएव सर्वकर्मीय सव्येनदक्षिणादानवर्जितमिति नचदक्षिणादानंदैवपूर्वं तस्यविस-र्गरूपत्वात् तथाचहयाज्ञवल्क्यः पूर्वंपितृभ्योदद्यात्तुदेवेभ्यस्तदन-न्तरम् असुराःपितृरूपेणदत्तं हिं संतिदानवाः तेषांविरक्षणार्थाय-पश्चाद्दैवेविसर्जयेत् । याज्ञवल्क्योपि पितृपात्रं तदुत्तानंकृत्वा-विप्रान् विसर्जयेदिति यत्त्वपसव्यंतु तत्रापीति तदन्यशाखिवि-षयं यच्चसंकल्पादिकमपसव्येनत्यागमात्रं सव्येनेति तन्न मानाभावात् तस्मादुभयपक्षेपि कात्यायनमतानुसारिणां दक्षिणादानं-पितृपूर्वकं सव्येनैवेतिसिद्धम् तथाचहेमाद्रिपद्धतौ सूक्तस्तोत्रजपंत्य

क्त्वापिण्डाघ्राणं चदक्षिणाम आह्वानं स्वागतं तंचविनाचपरिवेष-णं विसर्जनं सौमनस्यमाशिषां प्रार्थनन्तथा विप्रप्रदक्षिणांचैव स्व-स्तिवाचनकंविना पितृमन्यत्प्रकर्तव्यं प्राचीनावीतिनाम्दैति तथा उपवीतीपितृप्रीत्यै वित्तशाठ्यविवर्जितः दक्षिणांपितृवि-प्रेभ्य पूर्वं दद्याद्येतरान् इतरेभ्यइत्यर्थः तथा स्वागतस्वस्तिवा-चनंदक्षिणांचमदक्षिणाम् गोत्रवादनमर्घंच पठेतेउपवीतिनइति

गोत्रवादनं गोत्रन्नो वर्द्धतामित्यादिनाऽत्मानमाकलयन्
कारोऽपि याज्ञवल्क्योऽविसर्गात्प्राक् पात्रमुत्तानमिच्छति यथाऽभि-
सर्जनं कृत्वा गृह्यकर्त्तापि शौनकः प्रीतिरस्त्विति देवानामित्याश्व-
लायनादयः सर्वेषामपि पात्राणाम् अवग्रहीतं विधीयते स्वधाप्रो-
क्षणस्याभावे ग्रहणम् स्वेच्छयाभवेदिति अन्यच्च विसर्गरूपप्रति-
ष्ठापात्रचालनन्तु पूजने देवद्विजवाचनादिकं न कुर्यात् दक्षिणाया-
उपलक्षणार्थत्वात् तथा मन्त्रहीनं क्रियाहीनम् भक्तिहीनं द्विजोत्त-
मा श्राद्धं सम्पूर्णतायातु प्रसादाद्भवतामिति गोभिलोऽपि देवेवा-
चयित्वा पिण्डपात्राणि चालयित्वा दक्षिणां दद्यादिति पिण्डाद्य-
पात्राणि चेति विग्रहः नित्यत्वात् अचालयित्वा तत्पात्रम् स्वस्तिकु-
र्वन्तियेद्विजा निराशाः पितरस्तेषां शप्त्वायान्तियथागतम् ऋतुपूजाप-
सव्येनैत्यके तत्र चाचम्योदक्पराहृत्य निरायम्य शनैरसून षड्-
तूंश्च नमस्कुर्यात्पितॄनेवचसर्वदेतिवाक्यात विशेषमाह जातूकर्ण्यः
पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः नस्त्रीभिर्नचबालेन ना-
सजात्या कथंचनेति बृहस्पतिरपि भाजनेषु च तिष्ठत्सु स्वस्तिकुर्वन्ति
ये द्विजाः तदन्नमसुरैर्भुक्तम् निराशैः पितृभिर्गतैः भाजनानि भोजन-
पात्राणि स्वस्तीति भगवन्ब्रूहीति पारस्करः अत्रनाम गोत्रे दद्या-
दिति सूत्रयता चतुर्थ्या गोत्राद्युच्चारो विभाषा सूचितः ततोऽमु-
कपितुरमुकशर्मणोऽमुकसगोत्रस्य वसुरूपस्य श्राद्धप्रतिष्ठा ईमद्य
गोत्रायामुकशर्मणे इत्यादि तुभ्यमहं सम्प्रददे इति प्रयोगः तत्त्वेषु ष-
ष्ठीबहुवचनेन पितृदेशपक्षे त्वस्मत्पितृदेवेभ्य इति चतुर्थीप्रयोग वि-
सर्जनमन्त्रमाह।

**मू० वाजेवाजेवतेति विसृज्यानुव्रज्यामावा-**

जयेतिप्रदक्षिणीकृत्यनमस्कृत्यप्रविशेत्॥१८॥

ततोवाजेवाजइत्यनेन कुशमूले पिण्डविप्रान्पूर्वपश्चात्कु
शाग्रे देवद्विजान्विसृज्यतानतु आमामावाजस्येत्यनेन वहिर्य-
ज्ञोपवीतीतान् प्रदक्षिणीकृत्य नमस्कृत्यप्रवि शेत् इमितिशेष
अत्रकुशाग्रे रेवसर्वं विसर्गइत्येके तथा वाजेवाजेतिमन्त्रेणकुशमू-
लेनतांविसृजेत् देवांस्तेनैवमन्त्रेणकुशाग्रेणविसर्जयेदिति मनुरपि-
आमावाजस्यमन्त्रेण कर्तव्यं हिप्रदक्षिणम् नमस्कृत्यततोविप्रा
नासनेषूपवेशयेत् ताम्बूलदत्तोदद्यात्पाद प्रक्षालनततः पा-
दाभ्यागतत कुर्यात्पादमर्दनमेवच अवविसर्गप्रदक्षिणे ऽपसव्ये-
नेत्यकेतत्र स्वागतंस्वस्ति वचनन्दक्षिणाचप्रदक्षिणामित्युक्तो
छन्दयाज्ञवल्क्य वाजे वाजे जपेन्मन्त्रमामावाजस्यचैपुन वहि प्रद-
क्षिणं कुर्यादच्छिन्नजलधारया वन्धुवर्गेणसहितःसभार्यः सकुटुम्बकः
पुनराचम्यतत्रैव(१)स्वादुषंद०: जपेत्सुधी ब्राह्मणा सपठेयुस्तथा
ह्मोक्तविजोत्तमा, श्राद्धारम्भेवसानेच पादशौचेद्विजार्चने विकरे-
पिण्डदानेच षट्सुचाचमनंस्मृतमिति कात्यायनोक्तेः विसर्जये-
त्ततोविप्रा प्रणिपत्यपुनःपुन, आद्धारमुपगच्छेयु पुनराचमनन्तत
वैश्वदेवन्तत कुर्यात्स्वशाखोक्तविधानतइतिहारगमलासभवेद्बहि.
प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् बन्धुवर्गेणसहित पत्नभार्या-
समन्वितइति अथोर्ध्वकृत्य ततोच्छिष्टमार्जनप्रतिपत्तिपिण्ड-
विकिरप्रतिपत्तिवैश्वदेवनित्यश्राद्धशेषभोजननियमादौ•युच्यते प-
ठीनसि नस्पृशन्तितथादुष्टाश्चयेनोच्छिष्टमार्जनैस्तुपृष्टे तदुच्छिष्टे-
पितरोयान्त्येगति मचेत खनित्वानिक्षिपेद्भूमावन्यथारक्षणम्भवे

(१) संहितायामुत्तरार्द्धे । २९ । अ० मन्त्र । ४६ ।

गोत्रवादनन गोत्रन्नो वर्द्धतामित्यादिनानात्मावलम्बाशक्य कारोपि याज्ञवल्क्योऽविसर्गोत्पाक पात्रमुत्तानमिच्छति यम्भवि सर्जनकृत्वा गृह्यकर्तापिशौनक; प्रीतिरस्त्वामुदेवानामितिकात्यायनादय, सर्वेषामपिपदार्थानाम् स्वगृह्योक्तविधीयते स्वगृह्योक्तस्वाभावे ग्रहणम स्वेच्छयाभवेदिति मन्यच्च विसर्गरूपप्रतिष्ठापात्रचालनन्तुपूजने देवद्विजवाचनादिकंनकुर्यात् दक्षिणाया-उपलक्षणार्थत्वात् तथा मंत्रहीनंक्रियाहीनम् भक्तिहीनंद्विजोत्तमा श्राद्धंसंपूर्णतांयातु प्रमादाद्भवताममेति गोभिलोपि देवैवा-चयित्वा पिण्डपात्राणि चालयित्वा दक्षिणांदद्यादिति पिण्डादि-पात्राणिचेतिविग्रह नित्यत्वात् अचालयित्वातत्पात्रम् स्वस्तिकुर्वन्तिद्विजा निराशा पितरस्तेषां गच्छन्तियथागतम् कृतुप्रजाप-सव्येनैत्येके तत्र चापस्योदक्परावृत्यविरायस्य शनैरसून् पद-तुंश्च नमस्कुर्यात्पितृनेवचमर्वदेतिवाक्यात् विशेषमाहउपकुर्य पात्राणिचालयेच्छ्राद्धे स्वयंशिष्योथवासुतः नस्त्रीभिर्नचवालेन ना-सजात्याकथचनेति बृहस्पतिरपि भाजनेषुचतिष्ठत्सु स्वस्तिकुर्वन्ति-येद्विजाः तदन्नमसुरैर्भुक्तम् निराशै पितृभिर्गतै भाजनानिभोजन पात्राणि स्वस्तीतिभगवन्भृहीतिपारस्करः अवत्रात्मणेभ्योदद्या-दिति सूत्रयतावतुर्थ्यागोत्रादुच्चारोविभागशसूचित तत्तोमु-त्पितरमुकशर्मणो मुकसगोत्रस्य वसुरूपस्य श्राद्धप्रतिष्ठा र्थमदक गोत्रायामुकशर्मणइत्यादि तुभ्यमहमप्रदद इतिप्रयोग तत्तेपुरु-डीबहुवचनेन पितृदेशप्रजेत्वसुतिपत्रहृत्य दि चतुर्थ्यांप्रयोग वि-सर्जनमन्त्रमाह।

मू० वाजेवाजेवतेतिविसृज्यानुव्रज्यमावा-

## जस्येतिप्रदक्षिणीकृत्यनमस्कृत्यप्रविशेत्॥१८॥

ततोवाजेवाजइत्यनेन कुशमूलैः पित्र्यविप्रान्पूर्वंपश्चात्कु-
शाग्रैर्दैवद्विजान्विसृज्यतानन् आमावाजस्येत्यनेन बहिर्य-
ज्ञोपवीतीतान् प्रदक्षिणीकृत्य नमस्कृत्यप्रविशेद्गृहमितिशेषः
अत्रकुशाग्रैरेवसर्वं विसर्गइत्येके तथा वाजेवाजेतिमन्त्रेणकुशमू-
लेनतान्विसृजेत् दैवांस्तेनैवमन्त्रेणकुशाग्रेणविसर्जयेदिति मनुरपि-
आमावाजस्यमन्त्रेण कर्त्तव्यंहिप्रदक्षिणम् नमस्कृत्यततोविप्रा-
नासनेषूपवेशयेत् ताम्बूलंहिततोदद्यात्पाद पूजामनन्तरम् पा-
दाभ्यङ्गंततःकुर्यात्पादमर्दनमेवच अथविसर्गंप्रदक्षिणे ऽपसव्ये-
नत्येकेतन्न स्वागतंस्वस्ति वचनंदक्षिणांचप्रदक्षिणामित्युक्तेः
वृद्धयाज्ञवल्क्यः वाजेवाजेजपेन्मन्त्रमामावाजस्यवैपुनः बहिःप्रद-
क्षिणंकुर्यादच्छिन्नजलधारया बन्धुवर्गेणसहितःसभार्यःसकुटुम्बकः
पुनराचम्यतत्रैव(१)स्वादुषंसदं जपेत्सुधीः ब्राह्मणाः संपठेयुस्तेथा-
दर्भोक्तद्विजोत्तमाः आचारमेवमानेव-पादशौचेद्विजार्चने विकिरे-
पिण्डदानेच पदमुचाचमनंस्मृतमिति कात्यायनोक्तेः विसर्जये-
त्ततोविप्रान्प्रणिपत्यपुनःपुनः आद्वारमनुगच्छेयुःपुनराचमनन्ततः
वैश्वदेवन्ततःकुर्यात्स्वशाखोक्तविधानतइतिद्वारगमनासंभवेतुबहिः
प्रदक्षिणंकुर्यात्पदान्यष्टावनुव्रजेत् बन्धुवर्गेणसहित.पत्नभार्या-
समन्वितइति अथोर्ध्वं कार्यं ततोच्छिष्टमार्जनतत्प्रतिपत्तिपिण्ड-
विकिरप्रतिपत्तिवैश्वदेवनित्यश्राद्धशेषभोजननियमादीन्युच्यन्ते पै-
ठीनसिःनस्पृशन्तितथादृष्टास्तथैवोच्छिष्टमार्जनैस्तुपृष्टे तदुच्छिष्टे-
पितरोयांत्यदर्शनं प्रचेतः खनित्वानिक्षिपेद्भूमावन्यथास्पर्शनमथवे

(१) संहितायामुत्तरार्द्धे । २९ । अ० मन्त्र । ४५ ।

त् निषिद्धं स्पर्शनन्तेषां तस्मात्खननमुत्तमं तथोच्छिष्टमार्जनेविकल्प-
निराकरणानिदृश्यन्ते तथाहिवसिष्ठः ॥ श्राद्धेनोद्वासनीयानिउच्छिष्टा
न्यादिनक्षयात् च्योतन्तेवैसुधाकारास्तेपिबन्त्यकृतोदकाः ब्रह्मपु-
राणेपि अस्तं यातेततःसूर्येविप्रगात्रेणिचांभसि अधोमुखानिप्रय-
तोभूत्वासर्वाणिनिक्षिपेत् याज्ञवल्क्यः निक्षिपेत्सत्सुविप्रेषुद्विजो-
च्छिष्टं नमार्जयेत् श्राद्धदेशोपविष्टेषुविप्रेषुचनमार्जयेदितिविश्वामि-
त्रवरः अतएवव्यवस्थापयन्ति दैवपात्राणितद्दिनेमार्जयेन्नपित्र्याणी-
ति तथाचदेवलः एवंतृप्तेषुपानीयन्दद्यादाचमनन्तथा उच्छिष्टमा-
प्यपनयेत्तृणान्नोपमार्जयेदिति अन्ये त्वाहुः अस्तंयातइत्यनेनरा
त्रौमार्जनविधानाद्रात्रावेवेति तदनादरः पितॄणामुच्छिष्टमुन्नयेन्ना-
वमार्जयेद्व्यस्याद्विकल्पोपपत्तेः ॥ द्वितीयेऽह्नि सर्वेषांभाण्डानांच
चालनंस्मृतमितिब्राह्मवचनेसर्वेषामितरेनेनसर्वेषामेवमार्जनोपपत्ते
द्वितीयोपिनसम्यगिवाभाति , उच्छिष्टवर्णंतुतत्तिष्ठेद्यावद्विप्रविसर्ज
नमितिमनूक्तावपिरोध्यर्थात् तस्माद्यथासम्भवम्विकल्पइतियुक्तं
यत्तुद्वितीयेह्नीतिब्राह्मवचनन्तदप्यशुचिस्पर्शदूषितागृहान्तरसम्भ-
वविषयं तथाचप्रचेताः अत्रवर्णोत्तमोभुक्तकाव्यशेषंस्वगोत्रजैः अन्य
स्यांश्राद्धशालायांद्विजोच्छिष्टंनमार्जयेदिति तस्माद्गृहान्तरेसम्भ
वति नमार्जनं तदभावेद्विजांप्रेष्यपिण्डप्रतिपत्त्यनन्तरम्मार्जनमिति
व्यवस्थेतिसिद्धम् पिण्डप्रतिपत्तिमाहयाज्ञवल्क्यः पिण्डांस्तुगोजवि-
प्रेभ्यो दद्यादग्नौजलेपिवा गोशब्दोगतवीर्यवृषभपरः तथाचवायवीये
गतवीर्यस्तु योक्षश्चोऽनड्वांश्चैव तथाविधः तयोःपिण्डःप्रदातव्योयतो-
वीर्यन्नरोहति एतत्कामनाविशेषेव्यवस्थितं तथाचवायुपुराणम् पि-
ण्डमग्नौसदादद्याद्भोगार्थी सततंनरः पत्न्यैप्रजार्थीदद्यात्तु म-
ध्यमंमन्त्रपूर्वकम् । उत्तमाङ्गतिमन्विच्छन् गोभ्योनित्यम्प्रयच्छति प्र-

ओषधीनामथ: कीर्तिमप्सुनिदध्याद्विधापयेत् प्रार्थयेद्दीर्घमायुस्तथावहि-
भ्र: प्रयच्छति आकाशङ्गमयेदप्सुस्थितो वार्द्धिमुख: पितॄणां
स्थानमाकाशं दक्षिणादिक् तथैवचेति यथागृह्यंपिण्डप्रतिपत्तिरित्यन्ये
तु व्याख्यानं: आधत्तइतिमध्यमं पिण्डम्पत्नीप्राश्नाति पुत्रकामेति
आधत्तइतिप्राशनमन्त्र: समर्पणे त्वन्य: अपांत्वौषधीनां रसम्प्राश-
यामि भूतकृतङ्गर्भन्धत्स्वेति पठतीतिपुत्रकामस्त्रीमात्रे।पत्नीवचनमि-
त्येके पुत्रकामापतिव्रतेत्यसङ्गतं तथाचमनु: पतिव्रताधर्मपत्नी
पितृपूजनतत्परा मध्यमन्तु तत:पिण्डंन्दद्यात्सम्यक्सुतार्थिनीति
अवैतन्नन्दद्यात् किंविकिरंउच्छिष्टं निक्षिपेत्किंवापिण्डेष्विति त-
त्रैकेआहु: तस्याप्रशस्तत्वादुच्छिष्टएवेति अन्येत्वाहुरुच्छिष्ट पिण्ड-
त्वात्पिण्डेष्वेवेति तदुभयमपिनसम्यग्भाति उच्छिष्टपिण्डोच्छिष्टवैल-
क्षण्यात् अशुचिपिण्डत्वाच्च अतश्चपृथगेवकार्ये भूमौ निक्षिपेदिति
पिण्डानामपितद्दानस्य पाक्षिकत्वात् तथाचधर्मप्रदीपे निक्षिपे-
त्सु शुचौभूमौकाकेभ्यो विकिरन्तथेति अत्रैकेगृहेपिश्राद्धं कृत्वाप्सु
पिण्डान्निक्षिपन्ति तदसत् तीर्थश्राद्धविषयत्वात् तथाचविष्णुधर्मो-
त्तरे तीर्थश्राद्धे सदापिण्डं क्षिपेत्तीर्थे समाहित: दक्षिणाभिमुखो-
भूत्वा पितृदिक्स्थितकीर्तितेति वैश्वदेवसूक्त एव प्रपञ्चयिष्यते नि-
त्यश्राद्धे तु मार्कण्डेय: नित्यक्रियांपितृणान्तु केचिदिच्छन्तिसत्तमा:
नपितृणान्तथैवान्ये शेषंपूर्ववदाचरेत् नित्यक्रियानित्यश्राद्धं तुल्य-
विकल्प एवायमिलोके करणेउपकारातिशयो ऽकरणे प्रत्यवायोनि
त्यन्ये तदुभयमपिनसम्यक् पूर्वव्यवस्थोपपत्ते: तथाच नित्यश्राद्धं
नकर्तव्यं प्रसङ्गादेवसिध्यति श्राद्धान्तरेकृतेन्यत्र नित्यत्वात्तन्नहा-
पयेदिति एकोद्दिष्टादौ पितामहादि तृप्त्यसम्भवात्कर्तव्यम्पार्वणादौ
प्रासङ्गिकतृप्तेर्नेतिव्यवस्थेत्यर्थ: आहच दर्शादिश्राद्धनिष्पत्तौ ननि

तदस्य पृथक्क्रिया तेनैव तस्यमिति स्यात्काम्ये नित्यमितिकेचिदिति एवमेकपार्वणादावपि द्वितीये तु नित्यत्वादनुपपत्तेः शेषभोजनेऽपि विवदन्ते एकादश्यादावप्राशस्त्योक्तेः शेषभोजनमनित्यमिति केचित् शेषमन्नमनुज्ञात भुञ्जीत तदनन्तरम् इष्टैः मार्कण्डेयविधिवद् द्विजमार्गेषु समाहितमिति शंखलयोक्तेरनुज्ञापक्षे एव पितृसेवित भक्षणम् नित्यमन्यथानैतदन्ये तत्द्वयमपि नातीव शोभते पूर्वत्र नित्यत्वेन आम्नायविध्युपपत्तेः तथा च उपवासन्तदा कुर्याद् आघ्राय पितृसेवितमिति द्वितीये त्वनुज्ञाताभावे तीर्थादावभोजनमप्राप्नोतीति नैतदुचितम् भोजनाभावे प्रत्यवायश्रुतेः तथा च देवलः अ-दत्त्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन हव्यं देवा न गृह्णन्ति कव्यानि तरस्तथा जैमिनिरपि श्राद्धं कृत्वा तु यो विप्रो नाश्नाति पितृसेवितं स याति नरकं घोरं यावदाभूतसंप्लवम् ब्रह्मवैवर्त्ते पि पितृद्विजेभ्यः क-व्येभ्यो यद्यदन्नं निवेदितम् अन्नं व्यञ्जनं सर्वं पितृन् पूर्व्यान् तिमान्नव इति भोजनक्रममाह देवलः निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना आचम्य पाणिप्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ततो ज्ञातिषु तृप्तेषु स्वभृत्यान् प्रतिपूजयेत् पश्चात्स्वयञ्च पत्नीभिः पितृशेषमुदाहरेत् दीपंप्र च्छाद्य हस्तेन आद्दीपस्य यातयेदित्यर्थः उदाहरेद्भुञ्जीत तथा चोश नाः शेषमिष्टैः सहोदद्यात्स्वयं भुञ्जीत आपस्तम्बः सर्वतः समवदा याग्रासावरार्ध्यं प्राश्नीयात् यथोक्तं ग्रासावरार्द्धं ग्रासत्रयं समवदाये-त्यर्थः यथोक्तमितिमासभक्षणे नियमो नैतत् केचित् सर्वतः समवदाये तिसर्वान्नदानस्यैतत्त्वान्मांसभक्षणमपीतरेऽन्य एवं सतिश्राद्धविप्रान् मांसं भोजयित्वा भुञ्जीतान्यथा नेति व्यवस्थेति तथा च प्रचेताः विप्रान् भोज्य यो मांसमश्नात्यन्नं इतरभोजयेत् स याति नरकं घोरं तथा च तत्र वैश्वदेवान्तेसभर्तृका सहबान्धवैः भु-

हीयते दानंनिःफलतामेति प्रतिग्राकोदगिद्धना. कृमिकृष्णावमे-
दासो मैथुनीसूकरोभवेदिति स्वबुद्धिकल्पितग्लोक वचनंलिखितं
मया दृष्टश्रुतंससूत्रं वा. नवाप्यास्मेनदूषणं दृष्टंयत्कल्पांघैषु
निबन्धेषुतदाहृतं श्रुतिस्मृतिविरुद्धं दत्तत्पठन्तोयुदाहृतम् । प्रमा-
णमप्रमाणंवा सर्वज्ञःकर्तुमर्हति । दृष्टे श्रुतेनविश्वासोमाद्दशैः
कर्त्तुमिष्यते ॥

इति श्राद्धकाशिकायां तृतीयाकण्डिका समाप्ताः ।

॥ * इत्यावसथिक श्रीमदतिसुखात्मज. श्रीविष्णुमिश्रात्मजकान * ॥

॥ * कृष्णमिश्रव्यकृतौ श्राद्धकाशिकायां * ॥

॥ * अपरपक्षिकश्राद्धं समाप्तम् * ॥

---

॥ श्रीः ॥

उक्तंप्रकृतिश्राद्धमिदानींविकृतिश्राद्धमुपक्रमते ॥

## मू० अथैकोद्दिष्टं ॥ १ ॥

अथशब्दश्चानंतर्ये प्रकृतिश्राद्धानंतरं विकृतिश्राद्धमेकोद्दिष्टमुच्य-
त इतिशेषः अथवाथशब्दो ऽधिकारार्थं एकोद्दिष्टमिति विकृति
श्राद्धोपलक्षणं ततश्च प्रकृतिवद्विकृतिरितिन्यायात्सर्वाङ्गप्राप्तौवि-
कृतिश्राद्धनियमोपदेशप्रधानाद्धू, कीतानिभवंतीतश्चविकृयंतइत्य-
र्थः तानिच युगादिमन्वादि संक्रांतिमघाभरणी रविवार प्रेतपी-
डशक नवनितश तो र्थक्षिश्चापनयनोर्ध्वाक्त कपाल चयाश्मम-
हीमा पिण्डकर्मकल्पश्च दानि तथाहिमत्स्यपुराणादिषु श्रयनहि-
तय श्च श्लिपुत्रर्दक्षितस्तथा संक्रांतिषुच सर्वासुपिण्डनिर्वपणाद-
स्ते पुनन्तरः युगादिषुचकुर्वीतपिण्डनिर्वपणादृते तथा युगादौपि

तनयाने तथामन्वंतरादिषु 'अपिंपिण्डेनकुर्वीत वैष्णवंयात्रमाचरे-
त् वैशाखस्यतृतीयायां नवम्यांकार्तिकस्यच अ.ष्टं.सं क्रांतिवर्ज्जं यी-
त्पिण्डनिर्वपणंविना मघायुगादौभरण्यां संक्रांतौरविवासरे पि-
ण्डदानंनकुर्वीत यदीच्छेत्सुतजीवितं सुतः मघायांपिण्डदाने न-
ष्येष्ट पुत्रोविनश्यति कनीयांस्तुतयोरश्यां कुर्यादमादयाहते प्रेत-
श्राद्धेषु सुमंतुः विकिरंनैवदातव्यं नकुर्यादाशिषांजपः पङ्क्तौ-
र्नकुर्वीत एकोद्दिष्टेषुसर्वदा आशिषोद्विगुणादर्भाः जपाशीःस्व-
स्तिवाचनम् पितृशब्दःस्वसंबन्धः शर्मशब्दस्तथैवच । पात्रालंभोवगा-
हश्च उल्मुकोल्लेखना दिकम् तृप्तिप्रश्नं चविकिरः शेषमन्नमतथै-
वच । प्रदक्षिणाविसर्गश्च सीमांतानुवजस्तथा । अष्टादशपदार्थाश्च
प्रेतश्राद्धे विवर्जयेत् । सत्यव्रतः अनुदकमधूपंच गन्धमाल्यादिव-
र्जितम् । नवश्राद्धममंत्रं तु पिण्डोदकविवर्जितम् अनुदकमितिवै
दीर्घछान्दसं अवनेजनोदकरहितम् अनुदकम् पिण्डोदकविवर्-
जितं प्रत्यवनेजनोदक रहितमितिकश्चित् तन्नोचितं स्मृत्यन्तर-
योः महाप्रमतीरीः तथाच अनुदकमधूपञ्च गन्धमाल्यविवर्जितम्
निनयेदस्मनिपूर्वं ततःश्राद्धंप्रकल्पयेत् पश्चाद्विनियेन् पूर्वं त-
स्मिन्नेवयथाविधीति अस्यार्थः सर्वमन्नस्य दनेजनम् निनये ततः
स्तथापिपिण्डनिर्वपणाख्यं श्राद्धंकुर्यात्पश्चात्तत्रैव पिण्डप्रत्य-
वनेजनन्दद्यात् पूर्वमितिप्रत्यवने जनमुच्यते पूर्वपूर्वपूर्व्वइति धा-
तोराप्यायनार्थत्वात् एव सत्यनुदकम् पिण्डोदकविवर्जितमिति
पददयंजर्जस्वधाशावमाभ्याम् मार्जालवुनिषेकनिषेध मित्युचित-
मित्यर्थः देशुरपि अन्नंनविकिरेन्नमौ एव्लौ यान्ताशिषोनतु
पात्रालम्भोनचाचम्य मासनादिप्रयोगतः नामगोत्रे मासंबंध र-
हितम्पृतवत्वत् नवश्राद्धं गृहेकार्यं सार्थायदाप्नयोपिचेति । तथा

आसोमान्तश्चस्त्रिशाच्यं पिण्डानांचनसंस्कृतिः नपुण्यं पिण्डमर्विनिस्तम् वन्देहिमकरश्युतम् सर्वेष्वर्णेषुसर्वेवा एषसाधारणोविधिरिति मत्स्यपुराणे नित्यंनावत्मवच्ये ऽहमर्घावाहनवर्जितम् दैवहीनंनवेत्तत्तु नियमादिविवर्जितं तीर्थश्राद्धंप्रकुर्वीतपाकान्नेनविशेषतः आमान्नेनहिरण्येन कन्दमूलफलैरपि एषामभावेकुर्वीत श्रद्धयाचजलेनच तथाब्राह्मणान्नपरीक्षेत तीर्थकालञ्चचिन्तयेत् प्राप्ततीर्थोयदाविद्वान् स्तदाश्राद्धंसमाचरेत् आवाहनन्नतीर्थेस्यात् दर्पदानन्तदाभवेत् आहूताःपितरस्तीर्थे कृतार्थाःसंतिवैद्विजाः तथा आवाहनन्नदिग्बंधो नदोषोदृष्टिसंभवःसकारुण्यं वक्तव्यम् तीर्थश्राद्धं त्रिवत्सरेः भविष्ये पि देवाश्चपितरोयस्मा द्गंगायान्तुसदास्थिताः आवाहनंविसृष्टिश्च तत्रतेषांनविद्यते सकारुण्य मित्यनेन पितृव्यमाचादीनाम् पुत्राणामपि तीर्थश्राद्धेयथोपदेशं कर्त्तव्यमित्यर्थः कार्ष्णाजिनिः मौञ्जीवन्धाद्विवाहश्च वर्षार्द्धंवर्षमेवच पिण्डान्‌धपिण्डानोदद्युः सपिण्डीकरणाद्दद्‌इति। सपिण्डीकरणं षोडश श्राद्धोपलक्षणम् संयहकारोपि विवाहोपनयादूर्ध्वं वर्षंवर्षार्द्धमेवच नकुर्यात्पिंडनिर्वापं नदद्यात्कारणाद्दते अचापवादस्तेनैवोक्तः महालये गयाश्राद्धे मातापित्रोर्मृतेहनि कृतो द्वा होपि कुर्वीत पिण्डनिर्वपणं सुतइति च्छयाश्चैकोद्दिष्टेतूक्तंपूर्वकृता नावाहनमित्यादि आमश्राद्धन्तु आचारतिलके आमश्राद्धमनङ्गुष्ठ मग्नौकरणवर्जितं तृप्तिप्रश्नविहीनन्तु कर्त्तव्यमानवैर्ध्रुवं धर्मप्रदीपे आवाहनाग्नौकरणं विकिरम्पात्रपूरणम् तृप्तिप्रश्नंनकुर्वीत आमेहेमेकदाचनेति एतद्विषयमुपरिष्टाद्वक्ष्यामः अपिण्डकन्तु अग्नौकरणमर्घञ्च.वाहनावनेजने पिण्डश्राद्धेप्रकुर्वीत पिण्डहीनेनिवर्त्तते पिण्डनिर्वापरहितं यत्श्राद्धंविधीयते

स्वधावाचनलोपोस्ति विकिरस्तुन लुप्यते अक्षय्यदक्षिणास्वस्ति सौम नस्यं यथास्थितं। धर्मप्रदीपेपि। आवाहनंचैवतथार्घं अग्नौकरणमेवच अक्षय्यापोऽस्रविकरं पिण्डहीनेविवर्जयेदिति इदञ्चाक्षय्यवर्जनम-शक्त्यापिण्डकरणविषयं शक्तौतुयथास्थिति विहितत्वात्। स्मृति संग्रहेपि श्रद्धानिमित्तयुक्तस्य यदाकर्तुंन्नशक्नुयात् संकल्पश्राद्धमे-वासौ कुर्यादर्घादिवर्जितम् आपस्तम्बोपि संकल्पश्राद्धेऽर्घावा-हनाग्नौ करणपिण्डस्वधावाचनानिवर्जयेदिति व्याध्यादिनाय-थोक्तम् पार्वणङ्कर्तुमशक्तः संकल्पश्राद्धमेव कुर्यादित्यर्थः विकिरव्य-वस्थाच तद्वस्तरएवोक्ता हेमश्राद्धे तुबौधायनः संक्रमेन्नद्विजाभा-वेप्रवासेपुत्रजन्मनि हेमश्राद्धं संग्रहेचद्विजः शूद्रःसमाचरेत् व्याघ्र-पादः आर्त्तवेनद्विजाभावेग्रहणेदेशविप्लवे आमश्राद्धन्द्विजः कुर्या-च्छूद्रः कुर्यात्सदैवहि गालवः तीर्थेनन्नावापदिच देशभंगे रजस्यपि हेमश्राद्धन्द्विजः कुर्याच्छूद्रः कुर्यात्सदैवहीति अन्यस्मृतिभ्योज्ञेयम् अत्रैतच्चिन्त्यते किमामश्राद्धेऽग्नौ करणं स्यादुतनेति अत्रैक-आहुः सिद्धान्नेनविधिर्यः स्यादामश्राद्धेप्यसौविधिः आवाहनादि सर्वंस्यात्पिण्डदानञ्चभारत दद्यादन्नन्द्विजातिभ्यः शृतंवायदिवा-शृतं येनाग्नौकरणङ्कुर्यात्पिण्डांस्तेनैव निर्वपेदित्यतिदेशेना-ग्नौकरणम्भवतीति तदयुक्तम् अतिदेशस्यब्राह्मणविषयत्वात्। तथाचकल्पलतायाम् आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदःसदा हस्तेऽग्नौकरणं कुर्यात्ब्राह्मणस्यविशेषतः अतश्चामश्राद्धेऽग्नौकरण निषेधः शूद्रविषयेभवितुमर्हति किञ्चभविष्यत्पुराणे धर्मसेवान्तु धर्मज्ञोयदिशूद्रः प्रकुर्वते अग्नौकरणमन्त्रोस्य (१) नमस्कारोविधीय-तइत्यग्नौ करणनिषेधान्नमस्कारविधानात् अयथाविहित मतिपि-

(१) अग्नयेकव्यवाहनायनम ॥ १ ॥ सोमायपितृमतेनमः ॥ २ ॥

कृत्वा त्वपिण्डकापिण्डकविषयौ विधिनिषेधा वकृतमधुनोच्यते त-
त्रैकोद्दिष्टोपल तदितिव्युत्पत्ते र्नैतन्नवं मिश्रं पुराणञ्चेति त्रिधैकोद्दिष्टं
तत्रैकोद्दिष्टमित्यनेन किमुच्यते तथा चाङ्गिराः प्रथमेऽह्नि तृतीयेऽह्नि
पञ्चमे सप्तमे तथा नवमैकादशे चैव नवश्राद्धानि षट् तथेति आश्वला-
यनगृह्यपरिशिष्टम् नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून् अतःप-
रम्पुराणं स्याद् त्रिविधःश्राद्ध उच्यते हारीतोपि प्रायश्चित्तं प्याह चा-
न्द्रायणं नवश्राद्धम् प्राजापत्यन्तु मासिके एकाहस्तु पुराणेषु प्रायश्चि-
त्तं विधीयते इति तत्रैके आहुः यथाहिपार्वणस्यैवोक्तत्वा त्प्रेतैको-
द्दिष्टमेवैतदिति तदयुक्तं स्वादितमितिदृष्टिमन्त्र इत्याद्यङ्गस्य प्रेत-
श्राद्धेषु निरस्तत्वात् नचैतन्मासिकादि नवमिश्रञ्च भवितुमर्हति
पित्रादिशब्दस्य प्रयोगा..त्वात् तस्मात्पुराणैकोद्दिष्टमेवैतदिति-
युक्तं यतश्चावाहनादि निषेधविशेषवर्जं सर्वाङ्गमत्र भवतीति
विशेषविधि निषेधयोः शेषाभ्यनुज्ञाफलकत्वादितिन्यायात् ॥

## सू० एकोर्धेऽएकंपवित्रमेकःपिण्डः ॥२॥

कर्तव्यमितियथालिङ्गं वाक्यशेषः पात्रविशेषणत्वा ल्लिङ्गव्यत्ययः
पूजाविधिर्वाप्रकृतितोनेकप्रसक्तौ विकृतित्वात्प्रतिषेधः तदयुक्तं
प्रसज्यमानःप्रतिषिध्यत इति भट्टोपि दृष्टासर्वत्रशास्त्रेषुनिवृत्तिः
प्राप्तिपूर्विका तदभावा विशेषोत्र नहिद्दृष्टोद्वयोरपीति पवित्रप्रा-
देशमात्रं कुशैकदलम् यत्किञ्चित्प्रत्यवतिष्ठन्ते दर्भाःपवित्रमित्युक्तं
इतिवचनात् त्रिशाखस्तु भवेद्दर्भ श्चतुःशाखःकुशःस्मृतः पञ्चशाख-
स्तु निधिपः षट्शाखन्तु पवित्रकमितिपारिभाषिकत्वाच्च पवित्र-
पट्शाखैककुशमिति तदयुक्तं पार्वणेषु च सर्वेषु पवित्रं द्विदलं स्मृ-
तं एकोद्दिष्टेषु संप्रोक्तम् पवित्र द्विदलं नृप एकोद्दिष्टे शलाकै-
केति भागवतचतुर्विंशति मतवचनाभ्यामुल्लेखोपपत्तेः एकशब्दे-

पौनरुक्त्यं त्रिस्पष्टार्थं मनुचैकोद्दिष्टमित्यनेनैव पिण्डैक्ये लब्धे एकग्रहणं किमर्थं उच्यते पिण्डविच्छित्तिनिषेधार्थं सर्वांगपिण्डविध्यर्थं चेत्यदोषः तदुक्तम् तिथिच्छेदो न कर्त्तव्यो विनाश्राद्धं यदृच्छया । पिण्डश्राद्धं चदातव्यं विच्छित्ति न्नैवकारयेत् निषिद्धदिनेपीतिशेषः श्राद्धशब्देन ब्राह्मणभोजनम् ॥ पिण्डशब्दस्य पृथगुपादानात् चकारोऽग्नौकरणार्थं, तेनसतिसंभवे ब्राह्मणभोजनम् पिण्डदानंचत्रयाहैकार्यं भोजनासंभवेतु पिण्डमात्रमपिकार्यमितिविच्छित्तिशब्दार्थइति माधवीये आहिताग्नेः पितृचनम् पिण्डैरेवब्राह्मणानपिवा भोजयेदिति निगमस्मृतौ वाशब्दस्य संभवासंभवेन व्यवस्थितत्वात् एवंचाब्दिकमन्नेनैव कार्त्तव्यम् नामान्नेनेत्युक्तम्भवति तथाचमरीचिःअनग्निकःप्रवासीच यस्यभार्यारजस्वला आमश्राद्धं प्रकुर्वीत नतःकुर्यान्मृतेहनीति लौगाक्षिरपि पुत्रवत्स्वपिदारेषु विदेशस्थोप्यनग्निकः अन्नेनैवाब्दिकंकुर्याद्धेम्नानाऽऽमेनवाक्वचित् क्वचिदितिदर्शे रविग्रहेचयाहेसतीत्यर्थः तथाच गोभिलः दर्शेरविग्रहेपित्रोः प्रत्याब्दिकमुपस्थितं अन्नेनासंभवे हेम्ना कुर्यादामेनवासुतइति अत्राप्यसम्भवइतिविशेषणत्वा त्सम्भवेन्नेनैवेत्युक्तम् श्राद्धविघ्नेद्विजातीनामामश्राद्धं प्रकीर्त्तितं अमावास्यादिनियतमाससम्वत्सराहतइति हारीतोक्तेः अष्टाङ्गत्वमाह वृद्धयाज्ञवल्क्यः मधुचान्नञ्चघृतम्पानीयम्पायसन्तथा कुतुपस्तिलसयुक्तं ज्योतिश्चैवाष्टमीतथा कपित्थश्रीफलाकारःपिण्डोष्टांगसउच्यते तिलैरुपोष्यतेमूढ़ क्षीरैर्वाऽऽज्यघृतेनच तत् मधुनाचैवनामाचतोयैर्हस्तौ तथापरौ ज्योतिश्चैवानुजीवस्स्यात् पिण्डनिर्वपणंस्मृतं यत्तु मधुचाज्यंजलञ्चार्घपुष्पन्धूपन्विलेपनं बलिन्दद्यात्तुविधिवत्पिण्डोष्टांगोभवेद्यथेति ब्राह्मवचनन्तत्पार्वणविषय म्पूर्ववचनस्य [illegible] रणोक्तत्वात् ॥

# * नावाहनंनाग्नौकरणन्नात्रविश्वेदेवाः॥३॥

अत्रैकोद्दिष्टे विकृतित्वादावाहनाद्यङ्गंनभवतीत्यर्थः नन्व-यम्विशेषनिषेधार्थः अत्राहपद्धतिकृतयज्ञदत्तः एकोद्दिष्टे तुस्व-धावाचनन्नभवतीतितन्न पिण्डरहितश्राद्धे तन्निषेधात् तदुक्तं स्वधावाचनलोपोस्तीतिप्राक्अतश्चामंत्रिपते ऽमुकशर्मणेऽमुक-सगोत्रायस्वधोच्यतामितिप्रयोगः अत्रैकआहुः अत्रप्रथमपात्राभा-वात्संस्रवकृत्वाभावाच्चपितृभ्यः स्थानमसीतिमन्त्रानुपयुक्तत्वाच्च नात्रतत्पात्रमिति तदयुक्तं एकोद्दिष्टस्यविहितत्वात् यत्तुकर्कोपा-ध्यायैर्यत्पात्रन्युब्जकरणमित्युक्तं तदन्यथैवोपपद्यते पात्रन्युब्जन्नक-र्त्तव्यंकिन्तुस्थानमेवनिषेध्यमिति अस्तिचपा ऽभावान्न्युब्जत्वभावयो र्महाभेदः अतोर्थानवबोधात्तदयुक्तमिति तथाचस्कन्दमम्वादे एको द्दिष्टे नकुर्वीतस्कन्दपात्रमधोमुखं नोत्थापयेच्चतत्पात्रं यावच्छ्रा-द्धविसर्जनं अनान्तरोत्थापितेपात्रे श्राद्धं सम्पद्यतेतथेति तस्मात्स्व-धावाचनीयानास्तीयस्वधावाचनीयं कर्तव्यमितिसूत्रं ॥

## मू० स्वदितमितितृप्तिप्रश्नः सुस्वदितमितीत रेब्रूयुः उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्य-तामिति विसर्गेऽभिरतास्म इतीतरे ॥४ ॥

अत्रनैत्यनुवृत्तौ मण्डूकप्लुत्याइतिन्यायेन पूर्वसूत्रोक्तोविधि-रेवानुपज्यते तेनतृप्ताःस्थेतिप्रश्ने स्वदितमिदमक्षय्यमस्त्वित्यलोप-तिष्ठतां वाजेवाजेवतेत्वाभिरम्यतामिति विसर्गोभवतीतिवाक्य-शेषः अतएवतत्पुराणेकोद्दिष्टमित्युक्तं प्रेतैकोद्दिष्टे तदभावात् अयत्तयाहे किम्पार्वणंकार्यमेकोद्दिष्टमेवेति सन्दिह्यते उभयथा-

वचनदर्शनात् तथाहि जातूकर्ण्यः पितुःपितृगणस्यस्यं कुर्यात्पा-र्वणत्सुतः सर्वदादर्शवच्छ्राद्धं मातापित्रोर्वयेहनीति शातातपः प्रदानंयत्रयत्रैषां सपिण्डीकरणात्परं तत्रपार्वणवच्छ्राद्धं ज्ञेयमभ्युदयाहृते तथा अर्वाक्सम्बत्सराद्वृद्धौ पूर्णेसंवत्सरेपिवा येसपिण्डी-कृताः प्रेता नतेषां पृथक्क्रियेति एकोद्दिष्टं तुयमः सपिण्डीकर-णादूर्ध्वंप्रतिसंवत्सरंसुतैः मातापित्रोःपृथक्कार्यमेकोद्दिष्टं मृतेहनि व्यासोपि एकोद्दिष्टं परित्यज्य पार्वणन्तु करोतिनरः अकृतन्तद्वि-जानीयाद् भवेच्चपितृघातकः एकोद्दिष्टम्परित्यज्य पार्वणं यः समाचरेत् सदैवपितृहासस्यात् मातृभ्रातृविनाशकः मृताहेपार्वणं कुर्वन् नधोधोयातिमानवः सम्प्रक्तेप्याकुलीभावः प्रेतेपुत्रततोभ-वेदिति अत्रविरोधेकेचिदाहुः द्वादशपुत्रेष्वौरसक्षेत्रजपुत्रौ पार्व-णं कुर्यातामन्ये त्वेकोद्दिष्टमिति तथाचजातूकर्ण्यः प्रत्यब्दम्पा-र्वणेनैव विधिनाक्षेत्रजौरसौ कुर्यातामितरेकुर्युरेकोद्दिष्टं सु-तादशेति जाबालोपि औरसःक्षेत्रजःपुत्रो विधिनापार्वणेन तु प्र-त्यब्दमितरेकुर्युरेकोद्दिष्टंसुतादशेति विशेषोक्तेरित्यादिति तद-युक्तं प्रत्यब्दमित्यनेन चयाहव्यतिरिक्ताब्दस्य तृतीयादिविषयत्वा वगतेः एकोद्दिष्टंतुकर्तव्य मौरसेनमृतेहनि सपिण्डीकरणादूर्ध्वं मातापित्रोर्नपार्वणमितिपैठीनसिवचनविरोधाच्च एवञ्चसति मृ-ताहेपार्वणैकोद्दिष्टयो रुभयोरपिपक्षयोः प्राप्तत्वात्। अमायाम्वा क्षयोयस्यप्रेतपक्षे यथाभवेत्सपिण्डीकरणादूर्ध्वं तस्योक्तःपार्वणोवि-धिरिति शंखवचनेन दर्शप्रेतपक्षमृतयोरेव पार्वणस्यनियमितत्वा-त् तत्रमृतयोरेवपार्वण मन्यत्रमृतयो रेकोद्दिष्टमिति विज्ञानेश्वर-प्रभृतयः। अन्येतु द्वादशविधपुत्रेष्वौरसक्षेत्रजपुत्रयो र्विशेषस्तत्रा-पिमाग्निमत्वम् तत्रापि दर्शापरपक्षमृति रित्येवंविशेषोपसंहार

परम्परायापुरोडाशाग्नेय वद्विशेषोपसंहारपर्य्यवसाना इर्शापरपच मृतावपि साग्न्यौरसचेत्रजावेव पार्वणङ्कुर्याता मनरग्निपुत्रादति वर्णयन्ति तदेतद्विचारणीयम् किंनियम प्रतिपादनश्राय्यम् । उ-तविशेषोपसंहारइति तत्र यदिनियमप्रतिपादनश्राय्यमित्युच्यते तदादर्शापरपचमृतिं विनापि मार्गनेःपार्वणविधानमनर्थकं स्यात् य-थाहसुमंतुः प्रत्यब्दमितरेकुर्युः एकोद्दिष्टं सुतादश अनग्निमानौरस-श्च कुर्यात्साग्निस्तुपार्वणं पुलस्त्योपि अनग्निकौरमस्योक्त मेकोद्दिष्टं मृतेहनि प्रत्यब्दंपार्वणं साग्ने रन्येयात्सुनपार्वणमिति अथविशेषोप-संहारोपन्यास स्तस्यसाग्नेरेवपार्वणस्य विहितत्त्वा द्दर्शापरपचमृ-तावपि तस्यैवपार्वणम् ननिरग्नेरित्यतो ऽमायांवाचयोयस्येतिवा-क्यम् साग्निविषयएवोपसंहरणीयमिति विशेषोपसंहारएवयुक्तः प्रतिभाति तथाचश्राद्धकल्पलतायां इन्दुक्षयेप्रेतपचे विपत्तिर्यस्यदि-जन्मनः । साग्निकः पार्वणंकुर्या देकोद्दिष्टं निरग्निकइति । तस्मा-दौरसस्येत्र कलौप्रचुरत्वा त्तस्यएवसाग्निदर्शापरपचमृतौ पार्वणं कुर्यादन्यथैकोद्दिष्टमेवेतिराद्धान्तः तथाचमत्स्यपुराणम् । प्रदानंय-त्तत्रैषां सपिण्डीकरणात्परं पार्वणेनविधानेन देयमग्निमतांसदा वृद्धयाज्ञवल्क्योपि वैतानाग्निष्टयेषां मातापित्रो.क्षयेहनि नतेषामधिकारःस्या देकोद्दिष्टे कदाचन सपिण्डीकरणादूर्ध्वमग्नियु-क्तस्यपार्वणं अनग्नेस्तुक्रियानान्या एवं दृष्टम्तथाचित् एकोद्दि-ष्टविधिस्तेषां मन्त्रेवाजसनेयिनां येषामाध्यन्दिनीशाखा येद्विजा साग्निवर्जिताइति नन्वेवमाहिवह्निमयस्तु येविप्रा येचैकाग्नयएववा तेषांसपिण्डनादूर्ध्व मेकोद्दिष्टंनपार्वणमितिस्मृत्यंतरवचनंविरु-ध्येत् सत्यं वचनस्य अन्यथार्थोपपत्तेः तथाहि येपितरः साग्न-योमृताभवंति तेषांनिरग्निः सपिण्डनादूर्ध्वमेकोद्दिष्टं कुर्यात् ।

स्तथानिरग्नयः पितरोमृताः साग्निःपुत्रस्तदा सपिण्डनादूर्ध्वं मृता
हेपार्वणं कुर्यादिति तथाचमरीचिः साग्निकौतुपितापुत्रौ वमा-
यांस्यात्पितामृतः। पार्वणोहिविधिस्तस्यप्रतिसंवत्सरंभवेत्। तथा
साग्निकस्यपितुःपुत्रो ऽमावास्यायांमृतस्यच । पार्वणोहिविधि-
स्तस्य प्रतिसंवत्सरंभवेत् ततःनकश्चिद्विरोधः अभिरम्यतामिति
कर्तृकेऽभिरताःस्मेति श्राद्धिनः प्रतिवदेयुरित्यर्थः अत्रकेऽप्याहुः
एकएवद्विजोभोज्यः पिण्डोप्येकोविधीयते इतिवचनादेक एव-
श्राद्धे एकोद्दिष्टइति तदयुक्तम् तस्यवचनस्य प्रेतैकोद्दिष्टविष-
यत्वा दभावविषयत्वाद्वा अभिरम्यतामितिवदेत् ब्रूयुस्तेऽभिरता-
स्मइति याज्ञवल्क्येनबहुत्वाभिधानात् इतरइतिसूत्रोपदेशाच्च-
अत्रैतच्चिंत्यते किंक्षयाहश्राद्धम् नित्यकर्मकृत्वाकर्त्तव्यमुताकृ-
त्वेति तत्रनित्यंकृत्वैव श्राद्धमाचरन्तीतिसदाचारः वृद्धयाज्ञव-
ल्क्येतु श्राद्धानंतरंकर्मकुर्यादित्युक्तम् । तथाच क्षयेहनिसमा-
साद्य संस्नातोविधिपूर्वकम् स्नानंसंध्यांप्रकुर्वीत नित्यकर्मनकार-
येत् नित्यंनैमित्तिकञ्चाग्न्यं त्रिविधंस्वर्मलक्षणं निमित्तस्तुव्यति-
क्रम्य.नित्यंकर्मनकारयेत् जपोहोमस्तथादानन्तर्पणन्देवतार्चनं च
येहनिसमासाद्य नकुर्यात्पूर्वमेवहि क्षयाहन्तुसमासाद्य नकुर्यात्-
प्राक्चतर्पणं पितृघातीसविज्ञेयो वदत्येवपितामहइति तत्सदा-
चारविरोधाच्चिंत्यं अथवासामगयजुःशाखिनां पूर्वंनित्यंकर्मबह्वृ-
चानां पश्चादितिव्यवस्थेत्यविरोधः। सामगायजुषःपूर्वं ह्यबह्वृचा-
स्तंतथांत्तिकइतितेनैवोक्तत्वात् अथवा एकोद्दिष्टंतुयच्छ्राद्धन्तन्नै-
मित्तिकमुच्यते इत्येकोद्दिष्टस्यनैमित्तिकत्वेन नित्यान्नैमित्तिकं-
बलीयइतिन्यायादेकोद्दिष्टमेव पूर्वंपश्चान्नित्यम् नक्षयाहनिमि-
त्तकं पार्वणमपीतिव्यवस्था तथाचवृद्धयाज्ञवल्क्यः। एकोद्दिष्टेनि-

हस्ते तु तथाविप्रविसर्जने नित्यकर्मततः कुर्यात् तर्पणन्देवतार्चनम् नित्यं नैमित्तिकञ्चैव द्वावेतौपरमार्थिनौ नैमित्तिकेव्यतीतेतु ततो नित्यं समाचरेदिति विश्वामित्रोपि नैमित्तिकंयदाश्राद्धं पैतृकन्तु कृतेनरः तदानित्यं नकुर्वीत तीर्थश्राद्धं विनाक्वचित् नित्येनैमित्तिकेप्राप्ते नित्यं नपरिलंघयेत् आदौनिमित्तकंकुर्यात्पश्चान्नित्यं समाचरेदिति अपिच पठन्ति प्रत्याब्दिकेनिवृत्ते तु पश्चान्नित्यं समाचरेत् अनयोर्भिन्नतन्त्रत्वात् स्थालीपाकाग्निहोत्रवदिति ।

इति श्रीश्राद्धकाशिकायांचतुर्थीकण्डिकासमाप्ता ॥

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्मन कृष्णमिश्रस्यकृतौ श्राद्धकाशिकायांसूत्रवृत्तौ ।
एकोद्दिष्टश्राद्ध समाप्तम् ॥

---

एवं पार्वणैकोद्दिष्टमुपदिश्येदानीं सपिण्डीकरणमुपक्रमते ।

## सू० ततःसंवत्सरेपूर्णे त्रिपक्षे द्वादशाहेवा यदहर्वाबुद्धिरापद्येत ॥ १ ॥

ततशब्दोद्वितीयत सपिण्डीकरणमुभयात्मकम् ततउच्यतइत्यर्थं अथवाततइति इमाहात्परतः एकादशेहनीत्यर्थं । पार्वणैकोद्दिष्टानन्तरोपन्यासित्वर्थस्यलब्धत्वात् एतच्चनिरग्नौप्रेते एकादशाहेदर्शसभवेनाग्निकर्तृविषय एकादशाहेद्वादशाहेवेति बौधायनेन चानग्नौपितरिपुत्रस्य साग्नित्वाधिकारणाभावा द्वैतद्व्याख्यानं मयुक्तमितिवाच्यम् भार्यामरणपचेवादेशान्तरगतेपिवा अधिकारी भवेत्पुत्रोमहापातकिनोपिवेति शब्देनाधिकारस्यप्रतिपादितत्वात् तस्योपादाना च्छ्रौतेसा(र्त्ते दर्शानुरोधविषयत्वाच्च तथाचकार्ष्णाजि

निः सपिंडीकरणं कुर्यात्पूर्ववदग्निमत्सुतः परतोदशरात्राच्चेत्कुह्-रञ्जोपरीतरइति अग्निमान्साग्निः दशरात्रात्परतएकादशेश्राद्धे चाग्नोपलक्षणम् तथाचकात्यायनः सर्वेषामेववर्णानामाशौचान्तेस-पिण्डनमिति नाग्निमतांद्विजातीनामितिशेषः अद्भीपरितद्वयुक्ले-खात् एकादशेऽहनिकुर्य्यादित्यन्वयः इतरोनिरग्निः इहवसिष्ठः प्र-थमास्यादमावास्यामृताहाद्दशमेऽहनि सपिण्डीकरणं तस्यांकुर्या-देवसुतोग्निमान् मृताहादूर्ध्वं दिनमारभ्य दशमेऽह्नीत्येकादशा-ह्रइत्यर्थः ननु चैकादशाहे वृषोत्सर्गादिकर्मबाहुल्यात् कथमेतच्छ-क्यतेकर्त्तुम् नैषदोषः । पुरुषप्रयत्नसाध्यत्वात्स्वार्थस्यशक्यत्वात् अथवाएकादशाहंनिर्वर्त्य सपिण्डीकरणं कृत्वा प्रेतंसापिण्ड्य पि-ण्डपितृयज्ञानन्तरमुक्तकाले मासिकादिकुर्यादितिक्रमः मासि-कानन्तरं सपिण्डीकरणादूर्ध्वमावित्वादपि तथाच श्राद्धनिर्णोद-शकृत्वा कुर्यादेवसपिण्डनं । अपिचवृद्धिविषये रेणुः कार्यव्यासक्ततो-वित्ता ह्यावाहादेशविप्लवात् राजदैवेपघाताद्वामासिकान्यकृ-तानिचेति कृत्वासपिण्डनंवृद्धि कर्मास्रा न्मासिकान्यतइति एक-तनिर्णीतःशास्त्रार्थोऽन्यत्राप्युपतिष्ठत इतिन्यायात् संवत्सरेपूर्णे वृध्यभावेस्मार्त्ताग्नौप्रेते निरग्निकार्त्तुविषयं वृद्धिविषयस्यवक्ष्यमा-णत्वात् तथाचभविष्यपुराणम् सपिण्डीकरणंकुर्या द्यजमान-स्त्वनग्निमान् अनाहिताग्नेः प्रेतस्यपूर्णेऽब्देभरतर्षभ पुत्रस्यापि निरग्निकसपिण्डत्वं पितुर्मातुश्चधर्मतः पूर्णे संवत्सरेकुर्यात् वृद्धि-र्वायदहर्भवेत् रेणुरपि निरग्निश्चेद्दाकर्ता प्रेतश्चौपासनाग्नि-मान् सपिण्डीकरणन्तस्य पूर्णेऽब्देनात्रसंशयइति । विपक्षइत्य-यंशब्दः प्रेतकर्त्रोरोष्ठाहिताग्निविषयत्वेन समाहारमध्यमप-दलोपाभ्यांद्वेधाविवक्षितः । तथाहि अयं पक्षासमाहृता विपक्षः

पावादित्वान्ङीषभाव: अथत्रांतिभिर्दिनैरून:पक्षो त्रिपक्षोद्वादशाह: ततश्चाहिताग्नौप्रेतेनिरग्नि:कर्त्ता तृतीयपक्षेप्रेतेवानिरग्नौ आहिताग्नि:कर्त्ता द्वादशाहेसपिण्डीकरणंकुर्या दुभयोरेवाहिताग्नित्वेसाग्नित्वेवा द्वादशाहएवेतिव्यवस्थेत्यर्थ: अत्रविषयोवाशब्दस्सव्यवस्थितार्थत्वात् सम्भवेसतिघटते तथाचसुमन्तु: प्रेतश्चेदाहिताग्नि: स्यात्कर्तानग्निर्यदाभवेत् सपिण्डीकरणंतस्यकुर्यात्पक्षेतृतीयके गोभिल: साग्निकस्तुयदाकर्त्ता प्रेतश्चानग्निमान्भवेत् द्वादशाहेतदाकार्यं सपिण्डीकरणं सुते: साग्निक:आहिताग्नि: ननुच साग्निकशब्देन कथमाहिताग्नि: समानेनाऽग्निमद्वाचकत्वात् उच्यते तथाहिताग्नौप्रेते निरग्नि:कर्त्ता तथानिरग्नौप्रेते आहितोग्नि:कर्त्तेति शङ्कायाविद्यमानत्वात् तथायजमानोग्निमान् राजन्प्रेतश्चानग्निमान्भवेत् द्वादशाहेतदाकार्यं सपिण्डीकरणं सुतैरिति । भविष्यत्पुराणवचनेग्निमच्छब्दवत् भूम्निमतुप:-शामनादाहिताग्निवाचकत्वसम्भवत्वाच्च नचाहिताग्निश्च समानधर्मेत्युचितं किञ्च सपिण्डीकरणङ्कुर्या द्यजमानस्त्वनग्निमान् अनाहिताग्ने:प्रेतस्यकालान्तरेणविषयान्तरस्योपलब्धत्वात् उभयोराहिताग्नित्वेवचनं साग्निकस्तुयदाकर्त्ताप्रेतोवाप्यग्निमान्भवेत् द्वादशाहेसदाकार्यं सपिण्डीकरणम्पितुरिति अत्रापिवाशब्द:-आहिताग्न्यनाहिताग्निविषयत्वेनव्यवस्थितार्थ: ततश्चनिरग्नौप्रेतेसाग्निकोग्नि: कर्त्तागौचान्तेसाग्निकोग्नौ प्रेतेनिरग्नि: कर्त्तापूर्वेद्वेआहिताग्नौ प्रेतेआहिताग्नि:कर्ता द्वादशाहएवषोडशश्राद्धानिकृत्वासपिण्डी-करणङ्कुर्यादितिमुख्योर्थ: तथाच वृद्धमनु: द्वादशेहनिविप्राणामाशौचान्तेतुभूभृतां वैश्यानांचत्रिपक्षाद्वाथवास्यात् सपिण्डनमिति वाशब्द: स्मृत्यन्तरोक्तव्यव-

श्रायाम् अतश्चसाग्निनामितिशेषः अथवाहि ताग्निअनाहि-
ताग्नि शब्दौसाग्निनिरग्निपरौ तेनसाग्निकः कर्त्ताचेच्चैकाद-
शाह द्वादशाहकालयोः दर्शानुरोधेननियमः तथाचसंग्रहकारः
द्वादशाहादिकालेषु सपिण्डीकरणेकृते साग्न्यनग्निकत्वविष-
यःकर्त्तुरेवनियामकइति अतश्चपिण्डपितृयज्ञानुरोधात् सा-
ग्नेरेवद्वादशाहादिकालकर्त्तृत्वंननिरग्नेरित्युक्तं भवति तथाच
गालवः सपिण्डीकरणाब्दे ते प्रेतकाम्यदमास्थिते आहिताग्नेः
सिनीवाल्यां पितृयज्ञःप्रवर्त्ततइति आहिताग्नेः सिनीवाल्यामि-
तिचसाग्निदर्शयोरुपलक्षणं प्रमादात्कालातिक्रमेतु गोभिलः।
द्वादशाहादिकालेषुप्रमादादननुष्ठितं सपिण्डीकरणंकुर्यात् का-
लेपूत्तरभाविषु उत्तरभाविषु त्रिपक्षादिषु यदहर्वैवृद्धिरुभयो र-
प्यनग्नित्वविषयं वृद्धेःपूर्वमित्यर्थः असपिण्डीकृतस्य वृद्धौदाना-
नर्हत्वात् वाशब्दःस्मृत्यन्तरोक्तकालसमुच्चये तथाच बौधायनः
सपिंडीकरणसम्वत्सरेपूर्णे त्रिपक्षेवातृतीयेवामासिचैकादशेवेति-
भविष्येपि द्वादशाहेत्रिपक्षेवा षण्मासेवात्रिमासिवा एकादशेवापि-
मासि मङ्गलस्य ह्युपस्थितावितिमङ्गलेवृद्धौ चलोत्तरोत्तरकाले वृद्धि
सम्भवेपूर्वकालेवृद्ध्यनुरोधेनेति सपिंडीकरणङ्कुर्यादित्यर्थः एवञ्चस
त्युभयोरनग्नित्वे वृद्ध्यनुरोधेनैवसंवत्सरादर्वाक्सपिंडीकरणापक-
र्षोन्यथानित्यत्वम्भवति तथाचशाठ्यायनः प्रेतश्राद्धानिसर्वाणि स-
पिंडीकरणं तथा अपकृष्यापिकुर्वीत कर्त्तानांदीमुखेद्विज इति तथा
अन्तरेणैवयोवृद्धिं प्रेतश्राद्धानिकर्षति सश्राद्धीनरकेघोरेपच्यतेपितृ-
भिःसहेति अपिच नागरखंडे ततःसपिंडीकरणं वत्सरात्पूर्वंत स्थि-
तंवृद्धिर्वागामिनीचेत्स्यात्तदर्वागपिकारयेत् उशनाश्चपि पितुःसपि-
ण्डीकरणम् वार्षिकेमृतवासरे आधानाद्युपसम्प्राप्ता वेतत्प्रागपि-

वत्सरादिति आदिशब्दस्तीर्थलाभाद्यर्थःवाराणस्यांकुरुक्षेत्रे गया-यांतीर्थलाभतः सपिंडताद्वादशाहे मार्गसार्थे च्छतुगंतइतिवचना-त् ततःसंवत्सरेपूर्णेइतिसूत्रं केचिदन्यथैवव्याचख्युःतत्रविषय-व्यवस्थाभावा न्नादरोस्माकम् नचकात्यायनः अथातोऽधिकारइ-त्यारभ्य श्रौतस्मार्त्तकर्मणि श्रौताग्निस्मार्त्ताग्निमद्विषयाण्यभिधाय सपिंडीकरणमेवकेवलं साग्निकविषयमन्तरेण निरग्निविषयो-वाहस्मेतिसम्भवान्नायं सतोमदुक्तापिव्यवस्था सूत्रस्येतिमामनुक-म्प्यविपश्चितःसन्तां नन्वेवंव्यवस्था सूत्रसन्दर्भघटतइत्याशङ्कनी-यम् चरपिपूर्णतत्त्वेन सूत्रसंग्रहणार्थत्वात् तस्मादाहिताग्न्यना-हिताग्नि निरग्निविषयत्वे नोक्तैवव्यवस्थेतिसिद्धम् अतःकश्चिद्वा-ध्यकृदाद्दवर्षपर्यंतनवंकर्मलोपभयात् आनंत्यात्कुलधर्माणांपुंसां-चैवायुषःचयात् अस्थिरत्वाच्छरीरस्य द्वादशाहःप्रशस्यतइतिवचना-च्च। एकवर्षमध्य एव नशोभनइति तद्धस्मृतिवैयर्थ्यां न्नादरणी-यंसंवत्सरेणैवयोगःस्यादित्यनेनप्रत्यवायोपलब्धेःआनंत्यात्कुलधर्माणां-शरीरस्यास्थिरत्वेनेति हेतूपन्यासादस्यवचनस्य कुलधर्मपरत्वादशक्ता-रोगिकर्तृविषयत्वावगमाच्च किञ्च सतिसंभवतिमपिण्डस्याव-र्षांतएवसमापनविधानात् तथाच पूर्णेसंवत्सरेपिण्डः षोडशःपरि-कीर्त्तितइति पिण्डःश्राद्धोपलक्षकः एवंकालमभिधाययोगमाह ।

## मू० चत्वारिपात्राणि सतिलगंधोदकानि-पूरयित्वातीर्णिपितॄणामेकम्प्रेतस्य ॥ २ ॥

पात्राण्यर्घपात्राणिविभ्योर्घदानप्रसङ्गइतिचत्वारीत्युक्तं स-तिलत्वमसङ्गत्वाद्धिर्गंधतिलयुक्तत्वेन्नस्येशब्दोपादानमावराहित्यद्यो-तनार्थं अथवा तिलोसिमेतद्रव्यवइतिप्रेतपात्रे मन्त्रोक्तिपरिणामार्थ..

तथाचैकादशाहश्राद्धे रेणु: तिलोसिप्रे तद्देवत्य:प्रे तालोकाह्निनीत्तमं मन्त्रमुक्त्वातिलानेवप्रक्षिपेदर्घपात्रतस्त्विति लौकिपितृणामेकप्र तस्येतिक्रमस्ततः तेनवैश्वदेवकृत्यानन्तरं प्रे तकृत्य ततः पितृकृत्यमिति एकोद्दिष्टस्यसपिण्डीकरणांतर्भावात् तथाचवैजवापः चत्वार्युदकपात्राणिप्रयुनक्ति तत्र कंप्रे तायत्रीणिपितृभ्यस्त्विति तदयुक्तम् सूत्रोक्तक्रमस्यवैयर्थ्यात् नचवैजवापवचनं वाजसनेयिविषयं बह्वृच विषयत्वात् तथाचतत्सूत्रम् चत्वार्युदपात्राण्येकं प्रेतस्यत्रीणीतरेषामिति अतोविषयानवबोधादयुक्तमित्युक्तम् तथाचकठश्रुतिः दत्त्वापिण्डान्पितृभ्यस्तु पश्चात्प्रेतायपार्थिवः तत्तुपिडंत्रिधाकृत्वाचानुपूर्व्याच्चसंततम् निदध्या त्रिषुपिण्डेषुएषसंसर्जनेविधिः चर्तुर्थपिण्डमु त्सृज्यत्रिधाकृत्वापिण्डे पुनिदध्यादिति लौगाक्षिवचने पिचतुर्थपिंडस्यप्रदानप्रतीतेः नचैकोद्दिष्टस्यदैवपूर्वत्वंयुक्तम् तथाचशातातपः सपिंडीकरणंश्राद्धं दैवपूर्वन्नियोजयेत् पितृनेवाशयेत्तत्रपुनः प्रे तन्ननिर्दिशेत् इति यत्तुप्रे तपूर्वकंपिण्डश्राद्धमाचरन्तितद्भ्रान्तिनिबन्धनमित्युपेक्षणीयम् तथाचमार्कण्डेय पुराणे तिलगन्धोदकैर्युक्तं तत्रपात्रचतुष्टयम् कुर्यात्पितृणांत्रितयमेकम्प्रेतस्यपुत्रक धर्मप्रदोपेपि श्राद्धद्वयमुपक्रम्य कुर्वीतसहपिण्डनं तयोस्त्रिपुरुषपूर्वं मेकोद्दिष्टन्ततःपरमिति यत्पुनःपूर्वक्षण नश्यमेतमुत्तरांस्तुपितामहान्-चतुर्भिः पिष्टभिर्युक्तं पार्वणन्तुपठीयत-इति चतुर्विंशतिमतमुक्तं तद्द्वैवद्धेश्रात्पूर्वं प्रेतश्राद्धानुष्ठानविषयं इति- तथाचरणात् बह्वृचविषयंच तस्मात्पूर्वोक्त एवक्रम इतिसिद्धं एवञ्च पितृणा मित्यत्रैकशेषसमासा न्मात्रादीनामपीति गम्यतितत्रं दुहु-मात्र पि पूर्वजलिकपूरतेन सपिण्डन कर्तव्यं वेदान्ततः श्राद्ध- त्वात्तथाचहारीतः ततःप्रभृतिवैप्रेतः पितृसामान्यमाप्नुयात् इति-

तेपितृलोकञ्च ततःश्राद्धम्प्रवर्त्तते तथा पितृलोकङ्गतस्यान्नंभुक्तं स्वात्
स्वधासमं पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छतेति ब्रह्मपुराणेपि
मृतेपितरियस्याथ विद्यतेचपितामहः तेनदेयास्त्रयःपिण्डाः प्रपि-
तामहपूर्वकाः तेभ्यश्चपैतृकःपिण्डो नियोक्तव्यश्चपूर्ववत् मातर्य-
यमृतायान्तु विद्यतेचपितामही प्रपितामहीपूर्वन्तु कार्यस्तासाम-
यंविधिरिति यत्तुमनुनोक्तम् व्युत्क्रमाच्चप्रमीतानां नैवकार्यासपिण्ड
तेति तन्मातापितृव्यतिरिक्तविषयं तथाचस्कन्दपुराणम् व्युत्क्रमे-
णमृतानाञ्च सपिण्डीकृतिरिष्यते यदिमातायदिपिता भर्तानेषत्
दाविधिरिति एषविधिर्व्युत्क्रममृतौ सापिण्ड्यनिषेधविधिरित्यर्थः ।
सुमन्तुः त्रयाणामपिपिण्डाना मेकेनापिसपिण्डने पितृत्वमश्नुते
प्रेत इतिधर्मोव्यवस्थितइति अत्रैतच्चिन्त्यते किमपुत्रस्य सपिण्डी-
करणं स्यान्नवेति तत्रैकेकर्कादयश्राद्धन्नेति तथाचपैठ्ठी पिण्ड-
करणे प्रथमः पितॄणाम्प्रेतःस्यात्पुत्रवांश्चेदिति स्मृतिरपि अपुत्रस्य
परेतस्य नैवकुर्यात्सपिण्डताम् आशौचमुदकम्पिण्ड मेकोद्दिष्टं
नपार्वणं अपुत्रायेमृताःकेचित्पुरुषावास्त्रियोपिवा तेषांसपिण्डनाभा-
वादेकोद्दिष्टं नपार्वणमितिअन्येत्वपुत्रस्यापिभवतीत्याहुः तथाचरे-
णुः भ्राताबाभ्रातृपुत्रोवा सपिण्ड.शिष्यएववा सपिण्डीकरणङ्कुर्या
त्पुत्रहीनेमृतेसति भ्रात्रादिभिरपुत्रस्य सपिण्डीकरणेकृते एको-
द्दिष्टन्नियमतः कार्यन्तस्यैवसर्वदेत्यादि एवंद्वैधेसति करणे उपकारो
ऽकरणे प्रत्यवायोनेति केचित् आपदनापद्विषयत्वेन व्यवस्थेत्यन्ये
एतदुभयमप्य विचारितरमणीयम् कर्कादिपक्षेसापत्या पुत्रस्य
असपिण्डनेदौहित्रकर्तृकपार्वणादौ असपिण्डनस्य दानानर्हत्वा-
पत्तेः विधायकवचनैस्तस्यबाधितत्वाच्च द्वितीयपक्षेतुव्यवस्थापने
सपिण्डनस्यानियतत्वेन पिण्डस्यानर्हप्राप्त्यानर्हत्वदोषप्रसङ्गापत्तेः

तस्मादपुत्रशब्देनानपत्यस्य निश्चितत्वात्करणम् सापत्यविषयमकरणञ्चानपत्यविषयमितिव्यवस्थेत्यविरोधः ।

**मू० प्रेतपात्रम्पितृपात्रेष्वासिञ्चति येसमानाऽइतिद्वाभ्याम् ॥ २ ॥**

पात्रगतोदकम् तेनकर्तायेसमानाइतिऋग्द्वयेन प्रेतार्घोदकम्पितृपात्रेष्वासिञ्चति मेलनेनसंस्कुर्यादित्यर्थः अत्रसंस्कारप्रयोजनत्वात्पूर्वमासिंच्यपश्चात्पितृपूर्वञ्चतुर्थ्योर्घदानमितिक्रमः अत्रैतत्सन्दिह्यते प्रेतशब्देनकिञ्चतुर्थपुरुषोभिप्रेतः उताहो(१) न यमृतइति उभयथापि वचनदर्शनात् तथाहि वृद्धयाज्ञवल्क्यः वृद्धस्यैवतुयत्पात्रम् तत्सिञ्चेत्प्रपितामहे तत्सुतेषिञ्चयेत्पात्रन्तत्सुतेसिञ्चयेत्पुनः वृद्धवसिष्ठश्च नवातीतार्घपात्रञ्च पिण्डांश्चपरिकीर्त्यते पितृपात्रे पुपिण्डेषु सपिण्डीकरणन्तुतत्रइनि तथानिबन्धकृतोपि विश्वरूपप्रभृतयः केचित्प्रकर्षेणेतामृतःप्रेतइतिव्युत्पत्या चतुर्थस्यार्घपिण्डयोस्त्रिधाकरणेनासिकमेलनाभ्यामपि पिण्डत्रयस्यएककरणम नचमृतस्यापि अर्घपिण्डयोस्त्रिधाकरणेन पिण्डत्रयमेलनमित्येवं संशयः तत्रैकआह उभयशास्त्रत्वा दुभयमतप्रामाणिकत्वाच्च विकल्पएवेति अभ्युपगन्तव्या. किंविकल्पःसाधीयानुतव्यवस्थेति तत्रयदिविकल्पःसाधीयानित्युच्यते तदाष्टदोषदुष्टत्वंसम्भवति अथव्यवस्थासाधीयसी तर्हि सम्भवेत दोषाभावात्सैवग्राह्येति नचव्यवस्थासम्भवे ऽष्टदोषदुष्टोविकल्पो मीमांसकस्याग्राह्यः तस्माद्व्यवस्थैवग्राह्येति । तथाचाङ्गिराः प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः सीदन्तिहि प्रमाणानि प्रमाणैरव्यवस्थितैः वसिष्ठोपि अव्यवस्थाचसर्वत्र तद्विनाशनमात्मनइति अतश्चसाग्निकः कर्ता चतुर्थपुरुषस्यैवार्घपिण्डौ

(१) मममन्तरमुतइत्यर्थः ॥

विनाकृत्वा सपिण्डनङ्कुर्यात् निरग्निककर्तृत्व मृतस्यैवार्धपिण्डत्वेधाकरणेत्यविरोधः तथाचकाश्यपः प्रपितामहस्याप्येतस्य अर्धपिण्डक्रियात्रिधा इतरेषुनियुञ्जीत सपिण्डीकरणेग्निमान् इत्याज्ञवल्क्योपि इत्रप्रपितामहपिण्डन्द्विधाकारयेद्बुधः प्रकर्षेणागतः प्रेतो नपितामहप्रेतउच्यते स्मृत्यन्तरेपि प्रेतपात्रोदकपिण्ड मितरेषुनियोजयेत् त्रिधाकृत्वाक्रमेणैव सापिण्ड्यंतुनिरग्निकइति प्रेतपात्रोदकन्तत्र मृतपात्रोदकम् इतरेषुपितामहादिपात्रेषु ॥

## सू० एतेनैवपिण्डोव्याख्यातः ॥ ४ ॥

एतेनेत्यर्घोदकतोयेन पिण्डोव्याख्यातो ऽर्घोदकवत्पिण्डोपि विनाकृत्वा पितृपिण्डेषु योजनीयइत्यर्थः एवंकारोमेलनेनैव पङ्क्तिर्भवतीतिनियमयति एवञ्चसति व्युत्क्रममृतौ पत्न्यासहगमनमृतौ च यथाहं प्रपितामहभर्तृ सपिण्डने सत्यपिपार्वणान्वष्टकादौ पङ्क्तिसिध्यर्थम् पुनरपिपितामहप्रपितामह्यादिभि र्यथायोगंसपिण्डीकरणम् कर्तव्यमित्युक्तंभवति तथाचरेणुः व्युत्क्रमेणप्रमीतायेतद्विनाप्रेतताध्रुवं पुनःसपिण्डनं नेषां कुर्यात्मृतोपितामहे अन्वष्टकासुवृद्ध्यादौ पितामह्यादिभिःसह श्राद्धे सत्युपपन्नंस्यान्नचपित्रा सपिण्डनम् छन्दोगाः अर्घपिण्डंतोयदायपिण्डः पत्न्याचैकेनयोजितः अन्वष्टकेषुकर्तॄणां तर्पणं चपृथक्पृथक् पुनःसपिण्डनंकार्यं पितामह्यादिभिःसह पठन्तिच व्युत्क्रमेणापिमापिंड्यम् कार्यमाचार्यसंमतं तथाप्यूर्ध्वस्यसापिंड्येकृतेसपुनराचरेदिति एवमन्यत्राप्यूहनीयं अत्रैतन्मीमांस्यते किंसहगमनेपत्न्या सापिंड्यंकेवलं भर्त्रैवसहकिम्वा श्वश्र्वादिभिरपीति तत्रैकआहुः पत्न्याचैकेनकर्तव्यं सपिण्डीकरणं स्त्रियाः सामृतापिहितेनैक्यं गतामन्त्राहुतिव्रतैरि-

स्यैकेनैकोद्दिष्टमुख्यवाचकत्वात् एकश्राद्धस्य च पार्वणत्वाच्च प्रत्येक-स्वम्पितामह्यादुपलक्षणमिति अन्ये तु पुनरेकशब्देन जीवत्पिता-पितामह्या मातुःकुर्यात्सपिण्डनं प्रमीतपितृकःपित्रा पितामह्या-पितामहसुतः तन्मातातत्पितामह्या तच्छ्वश्रावासपिण्डनं श्वशुरादि-त्रिवाहेषु त्रिन्नानांयोपितांस्मृतमिति वचनविहितस्य विकल्पचतु-ष्टयस्य निवर्तकत्वमित्याचक्षते ततश्च पित्रादित्रयेण वमातुः सपिण्डनमिति उभयेषामभिप्रायः तदपरेन वदन्ते पत्न्यापिण्डस्य श्वशुरादिपिण्डेषु. मेलनमनुचितत्वादन्ते. अतश्चसत्यपिपार्वणत्वे ऽन्वारोहणे भर्त्रैकेवलंपत्न्यः सपिण्डनमित्येषामभिप्रायः एवं चसत्यन्वारोहणेभर्तृमात्रेणैव सापिण्ड्यं युक्तमित्याभाति मृता-यानुगतानायसातेनसहपिंडता अर्हति स्वर्गवासञ्च यावदाभूतसं-प्लवमित्यनेन विशिष्टविधानात् पार्वणादावपि तासामंशभागित्वं पिंडदानेष्वपि कुशेरेवशिरोगोपनादि विधानोपपत्तेः तथाच श्व-शुरस्यापर्तो यस्याश्छिरः प्रच्छादनक्रियेतिप्रागुक्तम। तथाचष्ट्वे माद्रिपद्वतौ पत्याचैकेनकर्तव्यं सपिंडीकरणं सुतैः सहयानेतु-मातॄणां यज्ञेनतत्पितामह्यौ वचनान्तरमपि तत्रव्यासः मातुः सपिंडीकरणं क्रियतेस्वामिनासह मातृकम्पैतृकम्पिंडमेकीकृ-त्यविधानतः। लौगाक्षिरपि पितामह्यादिभिस्त्रीभि र्मातरन्तुस-पिडयेत् पितरिम्रियमाणेतु तेनैवोपरतेसति पुराणसमुच्चये पि-तामह्यादिभिःसार्द्धं पितुःकुर्यात्सपिंडतां मातुर्भर्त्रासहैकेन नत्व-न्यैःश्वशुरैः सहेति पद्मपुराणानुपागेनाभिहित मित्यलंबहुना अत्रकेचिद्वदन्ते सहगमनभर्त्तुःसपिण्डनम् विधाय पश्चात्पत्न्या अपिसपिंडनमिति द्वयोःसपिंडनंपृथक्पृथगिति अन्ये पुनर्दंपत्योः परस्परममन्त्रकपिंडद्वयम् मेलनंकृत्वा ऽनन्तरन्त्रिभिःसहभर्त्तुः स-

पिंडनेपत्नया अपिक्तंभवेदित्येकमेवसपिंडीकरणमित्याहुः तन्न सहगमनेनुगमनेच भर्त्रैकेनसह पिंडनस्य विहितत्वादेकमेव सपिंडीकरणंयुक्तमित्याभाति तच्चासंस्कृतेन पत्यासपिंडनमयुक्त-मितिवाच्यम् असंस्कृतौनसंस्कार्यौ पूर्वैपौत्रप्रपौत्रकैः पितर-स्तत्रसंस्कुर्यादितिकात्यायनोब्रवीत् पापिष्टमपिशुद्धेन शुद्धं पाप-कृतापिवा पितामहेनपितरं संस्कुर्यादितिनिश्चयइतिकात्याय-नवचनात् पापिष्टमगतप्रेतभावं शुद्धेनप्रेतत्वरहितेन तथाशुद्धं-गतभावं पापकृताप्रेतेनपितरंसंस्कुर्यादित्यर्थः अनेनवचनेनासं-स्कृतेनापि मेलनमभ्यनुज्ञातं तस्मादेकमेवसपिंडीकरणमितिसि-द्धं तथाचरेणुः पृथक्चित्यांसमारूढा म्रियतेनुमृतापिवा पत्न्या-चैकेनकर्त्तव्यं तस्याअपिसपिंडनं पृथक्चित्यांसमारूढा यानारी तुपतिव्रता स्वामिनासहपिंडत्वे तस्याअपिकृतंभवेत् दंपत्योर्द्वि-जश्चैकम् भोजयेद्वीत्तथोत्तरे तयोःसपिंडीकरणान्तुदम्पतिपिंडयो-रिति स्मृतिरपि मृतेपितरिमातुस्तु नकुर्यात्सहपिंडनं पितुरेव-सपिंडत्वेतस्या अपिकृतंभवेत् अन्यच्च देशकालद्रव्यदेवकर्त्तव्ये तान्विकोविधिः भेदेपुनर्निमित्तानां कर्मावृत्तिरपीष्यते स्मृत्यर्थसा-रेपि अन्वारोहणे त्वेके चित्यारोहणे स्त्रियाः पृथक्सपिंडीकरणन्न-कार्यमिति अत्रैकेपुनराचक्षते ॥ सपिंडश्राद्धे चतुर्थः पिंड-दानकृत्वानन्तरं सपिंडाप्रत्यवनेजनादिसर्वकर्म मृतमारभ्यैवक-र्त्तव्यं पुनःप्रेतन्ननिर्देशेदितिवचनात् एवञ्चसतिप्रत्यवनेजना-दिसर्वकर्ममृतमारभ्यैव कर्मसुपितामहपिंडे पितुर्देवतात्वं पि-तामहपिंडे पितामहस्य हृद्रप्रपितामहपिंडे प्रपितामहस्यैतेरवं चतुर्थस्यनिवृत्ति रितितेषामभिप्रायः तदयुक्तं उपक्रमोपसंहार-विरोधा द्यो नैवारम्भस्तेनैरसमाप्तिरितिन्यायबाधादेकस्मिन्पिंडे

ऽन्यथ निर्देशेद्विदैवतैकत्वसम्भवादुपक्रान्त क्रमस्यैव्यर्थ्यापत्तेः नचतचेष्टं स्मृत्यन्तरे श्राद्धसमाप्तावेव पिंडमेलनस्याविहितत्वात्। यत्तु पुनःप्रेतं ननिर्देशेदित्युक्तं तदामापिंडाश्राद्धोत्तरश्राद्धेषु प्रेतशब्दनिर्देशाभावप्रतिपादनपरंनपुनर्व्युत्क्रमप्रयोगविधायकम् तस्मात्मकृतोपक्रान्तक्रमेणैव श्राद्धं कृत्वांते पिंडसंमेलनंकर्तव्यमि-तियुक्तं तथाचब्रह्मपुराणे सुवर्त्तुलांस्ततस्तांस्तुकृत्वा पिंडान्प्रपूजयेत् अर्घैः पुष्पैस्तथाधूपै दीपमाल्यानुलेपनैरिति अत्रकेऽप्याहुःपुत्रेणैवतुकर्तव्यंसपिंडीकरणं स्त्रियःपुरुषस्य तु तस्यान्येभ्रातृपुत्रादयोपि अपुत्रायांमृतायान्तु पतिःकुर्यात्सपिंडता मित्याभ्यांपतिपुत्रयोरेवाधिकारत्तादभावेस्त्रीणां सपिंडनंनास्तीति अन्येतुसर्वंसर्वस्य भवतीत्याहुः एवञ्चसत्यकरणे अनपत्यास्त्रीविषयमित्यस्मन्मतिः। तथाचपठंति कुर्याच्चेत्क्षतभर्तृकायदिमृता पुत्रः स्वभर्त्रैव तत् सापिंड्यं सचबांधवामृतयुवतिभिर्भर्तारमन्वेतिया तस्याभर्तृसपिंडनंतुतवती भर्तारमन्वेति या तस्यास्त्रीभि रनुक्रमादितिह पट्त्रिंशन्मतेनिर्णयः अस्यार्थः मृतभर्तृकायाः सपिंडनञ्चेत्पुत्रःकरोति तदाभर्त्रैवकेवलसपिंडयेत् जीवद्भर्तृकायास्तु पितामह्यादिभिरेव यातुभर्तारमनुगच्छति तस्याश्चमृतायाभर्त्रैवसपिंडनम्॥ अनेनचपतिपुत्रिण्यास्त्वनुगमनेपि पितामह्यादिभिरेवेति। अनेनचपतिपुलाभावेपि सपिंडनमस्तीतिगम्यते अतश्चोक्तैवव्यवस्थेति तथाचधर्मप्रदीपे अपुत्रायोषितःपिण्डं भर्तृपिंडेनयोजयेत् यदिजीवतिभर्तातु स्वश्वश्र्वादिषुसमावेशेदिति अपुत्रामापत्यामृतास्त्री अनपत्यायाः सापिंड्या प्रयोजनानुपयुक्तेः एवं तत्सन्दिह्यते किंसापिंडीकरणे श्राद्धद्वयमेकपाकेन उततत्पृथक्पाकेनेति उभयथावचनदर्शनात् तथाह्योदनश्चपृथक्पृथगिति तथासपिंडीकरणम् श्राद्धं

पृथक्पाकेनगस्यतद्भूति रेणुस्तुपाकैक्यमाह एवश्राद्धद्वयकृयत्
कार्यैक्यादिकपाकतः एकोद्दिष्टस्पार्वणञ्च शेषम्प्रकृतिवद्भवेत् इति
अत्रव्यत्रस्थीयते पृथक्पाकविधान मसपिंडनविषयम् पाकैक्यवि-
धानन्तु पुनःसपिंडीकरणविषयमिति अन्यथाविरोधापत्तेः नच
विकल्पः सम्भावनीयः अष्टदोषदुष्टत्वात् पुत्रिकापुत्रविषये बौधा-
यन. आदिमेत्प्रथमेपिंडे मातरम्पुत्रिकासुतः द्वितीयेपितर न्तच
तृतीयेचपितामहम चशब्दश्चतुर्थे चतुर्थसमुच्चयार्थ. गोत्रविषयेतु
मार्कण्डेयः ब्राह्मादिषुविवाहेषु यातूढाकन्यकाभवेत् भर्तृगोत्रेण
कर्तव्या तस्याः पिंडोदकक्रिया आसुरादिविवाहेषु पितृगोत्रे-
णधर्मविदिति लौगाक्षिः मातामहस्यगोत्रेण मातुः पिंडोदक-
क्रिया कुर्वीतपुत्रिकापुत्र एवमाहप्रजापतिरिति पत्नीकर्तृक सा
पिंडे विरोधमाहतते लौगाक्षि. सर्वाभावेस्त्रियःकुर्युः स्वभर्तॄणा
ममन्त्रकम सपिण्डीकरणंश्राद्ध मेकोद्दिष्टञ्चपार्वणं श्राद्धेषुमन्त्र-
वत्पत्नी कर्मकुर्याद्यथाविधिः तदौर्ध्वदेहिकेसाहि मन्त्राहीधर्मसं-
स्कृतेति अत्रविरोधेसमन्त्रककरण धर्म्यविवाहोढाविषयं सम-
न्त्रककरणन्तु मन्त्रोढाविषयमितिव्यवस्था तथाचशातातपः धर्म-
विवाहेरूढाया सापत्नीपरिकीर्तिता सहाधिकारिणीसाया यज्ञा-
दौधर्मकारिणी तथाच मन्त्राहाधर्मसंस्कृतेत्युक्त एतत्रानुज्ञाविषयं
नारीयात्वननुज्ञाता पित्राभर्त्रासुतनवा विफलन्तुभवेत्तस्या या-
करोत्यौर्ध्वदेहिकमित्यापस्तम्बोक्तेः तदभावेविशेषमाह कात्यायनः
असंस्कृतेनपत्न्याच अग्निदानसमन्त्रकम् कार्यमितरत्सर्वं का-
रयेदन्यमेवहि तथा सर्वबन्धुविहीनस्य पत्नीकुर्यात्सपिण्डनं ऋत्वि-
जाकारयेद्वापि पुरोहितमथापिवेति पत्नीकर्तृत्वसाध्वीपरम्वा ।
अनुमरणमभर्तुः. पालयन्तीव्रतेस्थिता पत्नीदद्यात्तत्पिंड कृत्स्न

मर्थंहरेदपीति वचनादिति असंस्कृतोऽनुपनीत: सचकृतचूड-स्त्रिवर्ष: तथाचसुमन्तु: श्राद्धंकुर्यादवश्यन्तु प्रमीतपितृकोद्विज: । व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदिइति यत्तुमनुनोक्तं नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते नह्यस्मिन्युज्यतेकर्म विनामौंजीनिबन्धनादिति तदविवर्षकृतचूडविषयं तथाचसुमन्तु: अनुपेतस्तुकुर्वीतमन्त्रवत्पैतृमैधिकं । यद्यसौकृतचूड:स्या द्यदिस्याच्चत्रिवत्सर: नाभिव्याहारयेद् ब्रह्मयावन्मौञ्जीनिबन्धनम् मन्त्राननुपनीतोपि पठेदेवैकएवयइति तस्मात्त्रिवर्षकृतचूड: पित्रौर्ध्वदेहिकम् मन्त्रवदेवकुर्वीतेत्यलम्प्रसंगेन ॥

## सू० अतऊर्ध्वं संवत्सरे प्रेतायान्नंदाद्यस्मिन्नहनिप्रेत:स्यात् ॥ ५ ॥

अतइति सपिंडनादूर्ध्वं वीप्सानिताप्रतार्या प्रेतायेतेतकत्वंविहितपार्वणव्यतिरिक्तविषयं अह:शब्दस्थितिवचन: अन्नग्रहणंमतिसम्भवे आमव्युदासार्थं तेनचयाहैपाकेनैवश्राद्धमितिज्ञापितम् अत्रच सपिण्डनादूर्ध्वंप्रेतशब्दोपादानात् द्वादशाहादौसपिण्डनेपि पुनर्मासिकावृत्तिज्ञापनार्थम् तथाचगोभिल: यस्यसंवत्सरादर्वाग्विहितातुसपिण्डता विधिवत्तानिकुर्वीत पुन:श्राद्धानिषोडशेति विधिवदितियथाधिकारं पार्वणैकोद्दिष्टविधिनेत्यर्थ: तथाचपैठीनसि: सपिण्डीकरणादूर्ध्वं यदाकुर्यात्तदापुन: प्रत्यब्दंयोयथाकुर्या त्तथाकुर्यात्सदापुन: सपिण्डीकरणादूर्ध्वमित्युक्तं तत:प्रागेकोद्दिष्टविधिनेतिगम्यते सपिण्डीकरणादर्वा क्कुर्याच्छ्राद्धानिषोडश एकोद्दिष्टविधानेनकुर्या त्सर्वाणितानितिनैवोक्तत्वात् जातूकर्ण्योपिपित्र्य: पितृगणस्यस्य कुर्यात्पार्वणवत्सुत: प्रत्यब्दमिति

मासञ्च विविर्द्धयःसनातनइति पुनर्मासिककरणमाह कात्याय- नः । सपिण्डीकरणादूर्ध्वम् नदद्यात्प्रतिमासिकं एकोद्दिष्टवि- धानेन कुर्यादित्याहगौतमः .सपिण्डनादूर्ध्वमेकोद्दिष्टविधानेन प्रतिमासिकन्नदद्या त्किन्तुपार्वणविधानेनेतिकात्यायनमतं गौत- ममतेत्वेकोद्दिष्ट·विधानेनेति अयंव्यवस्थितोविकल्पः साग्निकः पार्वणविधिना न्निरग्निरेकोद्दिष्टविधिनेत्यर्थः तथाचजावालः अ- सपिंडीकृतंप्रेतम् एकोद्दिष्टेनतर्पयेत् सपिण्डीकरणादूर्ध्वम् त्रि- भिःसामान्यमिष्यते पुलस्त्योपि एकोद्दिष्टेनतेताव द्यावत्पित्रोःस- पिण्डनं सपिंडीकरणादूर्ध्वं मेकोद्दिष्टन्निवर्ततइति साग्निकवि- षयमेतत् गौतममतोक्तमेकोद्दिष्टन्तु निरग्निविषयमित्यविरोधः .शौनकोपि तदूर्ध्वमेकोद्दिष्टविधाने नदद्यादिति पार्वणत्वेविशे- षमाह गौतमः अदैवंपार्वणश्राद्धं सोदकुम्भमधर्मकम् दद्यात्प्रत्या- ब्दिकश्राद्धा त्संकल्पविधिनान्वहं अधर्मकं दातभोक्तृधर्मञ्चत्यं प्रत्याब्दिकश्राद्धात्पूर्वंसपिंडीकरणादूर्ध्वमित्युक्तेः अत्रैतत्सन्दिह्यते सापिण्ड्यादूर्ध्वंमासिकेषु किंप्रेतशब्दस्यनिर्द्देशः उतपितृशब्दस्येति

तत्रैकआहुः सपिण्डीकरणादर्वाक्प्रेतशब्देनतं वदेत् तदूर्ध्वम्प्रे- तशब्देन शर्मशब्देन निर्दिशेदित्यनेनपितृशब्दइतिअन्येत्वाहुः पितृ शब्दस्योच्चारणस्य मासिकादन्यश्राद्धविषयत्वा त्प्रेतशब्दएव तथाच यस्यसंवत्सरादर्वाक्सपिण्डीकरणंभवेत् प्रेतत्वमस्य पितृत्वञ्चभवेत्त- स्यहिरूपतेति मासिकेषु प्रेतत्व मष्टकादौपितृत्वमित्यर्थः अतोय- दप्युक्तमाद्यादौ पार्वणत्वे ग्नौकरणमाह पाणौहुतन्तुनाश्नीयात् पितोद्देशेपुमर्वदा तद्धोमन्तुनवाकुर्या दश्नीयात्तुसपिण्डने .अस्यार्थः म.ग्निनाप्रेतोद्देशेषुमासिकेषुप्रेताग्नावाहिरयुद्देशेन पाणौहुतंना श्नीया त्किन्त्वग्नौक्षिपेत् सपिण्डनेतु प्रेतश्राद्धत्वेपि हुतमश्नीयात्

तद्दोमश्चनवेतिनिरग्निविषयं वाग्रब्दस्यव्यवस्थार्थत्वात् निरग्नेरे कोद्दिष्टत्वाद्ग्नौ करणाभावइति तथाचकात्यायन: इस्तेहुतं-यद्ग्नीया ब्राह्मणोब्राह्मणदुर्वल: मध्ये समस्तशास्त्र मितिशाता तपोब्रवीत् स्मृतिरपि पितृविप्रकरेहोम: माग्नेरपिभवेदिहं अग्नौ-करणशेषंहि पित्र्यब्राह्मणभोजने लौकिकेग्नौचिपेदन्नं अ.हेष्वन्नं करेहुतं पार्वणादौतदग्नीयादित्यु,क्तम् श्रीधरादिभि: पठन्तिच साग्निकेनतुविप्रेण यदन्नं हूयतेकरे तदन्नंनिचिपेदग्नौ भुक्त्वा-चान्द्रायणञ्चरेदिति अथवासूत्रे प्रेतशब्दग्रहणं त्रिवर्षपर्यन्तमा-ब्दिकश्राद्धस्याशुद्धत्व ज्ञापनार्थं तथाचहृद्धयाज्ञवल्क्य: सपिण्डीक-रणादूर्ध्वं यावदब्दत्रयं भवेत् तावद्देवनभोक्तव्यं वर्जयित्वाद्ध-येऽहनि पठन्तिच एकादशाहमारभ्य यावदब्दत्रयम्भवेत् ताव-च्छाद्धेनगृह्णीया दितिशातात पोब्रवीत् अत्रैकेआहु: त्रिवर्षप-र्य्यन्तंश्राद्धहुहे नकुर्यादिति प्रेतमशुद्धश्राद्धं अत्रैकेप्रत्यवतिष्ठन्ते आब्दिकेपादकृच्छ्रंस्या देकाह:पुन राब्दिके अतऊर्ध्वं नदोष: स्यात् प्रमाणाभावात् बहि.श्राद्धंनकुर्वीतेति वचनाच्च पठन्तिच त्रैवार्षिकश्राद्धेतस्या च्छंद्धस्यचनं यथेतिवचनात् त्रैवार्षिक-मेवाशुद्धमिति तत्ततदुक्तवचनविरोधात् किञ्चैतद्वचनम्प्रायश्चि-त्तभावं बोधयति नशुद्धत्वविदधाति वचनां तरविरोधात् भर-द्वाज: प्राणायामत्रयञ्चैव अहोरात्रंसपिण्डनइति अतश्चसदाचा रानुरोधा दाब्दिकेपादकृच्छ्रस्यादित्येतद्वचनमेव व्याख्येयम् आब्दि केऊनाब्दिकानन्तरकर्त्तव्यमासिके, सपिण्डनेपुनरहोरात्र-स्योक्तत्वात् पुनराब्दिकेसपिण्डनम अतश्चवर्षान्ते मृताहएव सपिण्डीकरणङ्कृत्वाब्दिकमितिक्रम. तथाचजावाल: पूर्णेसम्ब त्सरेहत्ते मृताहेपुनराब्दिके सपिण्डीकरणं कृत्वा कुर्यात्पुन-

स्तुने तरः तथाच पूर्णे संवत्सरे कुर्यात्सपिण्डीकरणं सुतः एको-
द्दिष्टन्तु तत्रैव मृतेऽहनि समापयेत् गालवः तत संवत्सरे पूर्णे हि
श्राद्धे मृतवत्सरेति तथाच पूर्णे संवत्सरे चान्द्रायणञ्च मिश्रक-
म्प्राजापत्य पुराणेष्वेकइत्यर्थः एषां लक्षणन्त्वेकोद्दिष्टप्रकरणे
ऽभिहितं तथाच हारीतः चान्द्रायणन्तु श्राद्धे प्राजापत्यन्तु मिश्रके॥
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयतइति पुराणेष्विति बहुत्वं-
वित्वपरं तत ऊर्ध्वं न दोष इत्यर्थः चतुर्थस्याग्रहत्वात् तथाच मासि-
कान्युपक्रम्याह वेणुः दशमैकादशे मासि द्वादशे न्यूनवत्सरे ततो-
परेद्युरब्दान्ते सपिण्डीकरणं भवेत् ततोपरेऽब्दे द्वितीयवत्सरादौ
तथाब्दिकम् तृतीयवत्सरात् प्रत्याब्दिकमिति क्रमइति षपिच-
पठन्ति सपिण्डीकरणादूर्ध्वं यावदब्दद्वयम्भवेत् तावद्विप्रोनभो-
क्तव्यो यदि व्याससमोपिच तथाच सपिण्डीकरणादूर्ध्वं काम्य-
श्राद्धेषु भोजयेत् संवत्सराश्चत्वारो वर्जनीयाः प्रयत्नतः प्रथमेऽब्देतु
मांसानि द्वितीये स्थानि चैव हि तृतीये रुधिरं प्रोक्तं चतुर्थे त्वविशुध्य-
तीति॥ द्वादशाहस्यमासिपिण्डविपर्ययमाह कात्यायनः अशुद्धेषु
च श्राद्धेषु विप्रो भोक्ता न जायते विप्रं कृत्वा मयं कृत्वा पार्श्वे कर्म निवे-
दयेत् प्रेतायान्नन्दद्यादिति सूत्रपरा तथोद्दिष्टकर्मस्वपक्रम्यैकादश्या
मयुग्मान्ब्राह्मणान्भोजयेदित्यादिना गृह्योक्तं प्रेतश्राद्धमात्रोपयुक्तमि
ति नायपुनरुक्तमिति स्थापितं तेनमासिकादिषोडशकङ्कृत्वा स-
पिण्डयेदित्युक्तंभवति अन्यथा प्रेतश्राद्धान्यकृत्वा सपिण्डीकरणङ्कु-
र्वन्नमूषयिष्यत् मासिकान्याह याज्ञवल्क्यः मृताहनि तु कर्तव्यम्
प्रतिमासन्तु वत्सरम् प्रतिसंवत्सरञ्चैव माद्यमेकादशेऽहनि अस्या-
र्थः पद्मपर्णे तम् मासिमृताहे मासिकानि कार्याणि प्रान्तिकश्रा-
द्धमपि प्रतिवर्षमेवमेव आद्यन्तु श्राद्धमेकादशेऽह्नि कार्यमिति तथैत-

त्सन्दिह्यते मासिकस्यमृताहेविहितत्वात् प्रथमासिकञ्चिं मृताहे-
स्या इतैकादशाह इति तत्रे कआहुः आद्यमासिकमेकादशाहे द्वि-
तीयादिकन्तु प्रतिमासंमृताहमिति तथाचरेणुः प्रतिमासम्मृता-
हेषु: द्वादशैतानिवत्सरम् उत्कृष्यते हितत्सदंकुर्या देकादशेन्हिं-
तदिति अन्येत्वाहुः एकादशाहेश्राद्धद्वयम् कार्यमेकं प्रथममासि-
कत्वेनापरमेकादशाहिकत्वेनेति तत्रनाद्य. प्रथमासिकस्य द्वादशा
हादिकालेषुविहितत्वात् तथाचगोभिलः मरणात् द्वादशेन्हिस्या
न् मास्यूनेवोनमासिकमित्यादि नद्वितीयः नचैकादशाहश्राद्धमे-
व श्राद्धद्वयोपलब्धेः तयोरेकैकादशेन्हितन्नियमितत्वाच्च तथाचा-
त्रिः प्रेतार्थंसूतकान्नेन ब्राह्मणान्भोजयेद्दश आद्यश्राद्धनिमित्तेन चै
कमेकादशेह्नीति एकादशेन्हि दशैकञ्चेत्यन्वयः तथाप्रथमेन्हितृती
येच पञ्चमेसप्तमेपिच नवमैकादशेचैव तत्रचश्राद्धमुच्यते तस्मान्नव
श्राद्धमाद्यं चैकादशाहेप्रथमासिकन्तु द्वादशाहादावितियुक्तम् तथा
चकाष्र्णाजिनि. ऊनान्यूनेपुमासेषु विषमेन्हिसमेपिवा त्रैपक्षिकं-
त्रिपक्षेस्या न्मृताहेष्वितराणितु ॥ ऊनानीत्यूनमा सिकोनपाण्मा
सिकोनाब्दिकानि अपिचपठन्ति आद्यन्तैपक्षिकञ्चै व ऊनषाण्मा-
सिकेपिवा अन्यानिमासिकानिस्युः स्वस्वकालेयथाविधीति आद्य
मूनमासिकम् प्रथममासिकमित्यर्थः एषांकालमाह गालवः ऊन-
षाण्मासिकंषष्ठे मासनूर्न मासिकम् त्रै पक्षिकन्त्रिपक्षेस्या दूना-
ब्दंद्वादशेतथेति एषांमृताहेष्वनियमइत्यर्थः तथाचक्रतुः श्राद्धए-
कादशेमासि तथाश्राद्धे तुपञ्चमे ऊनाब्दिकोन प क्षासौ भवेतांश्राद्ध-
कर्मणीति पद्यान्तरमाहगौतम. एकद्वित्रिदिनैर्न्यूनेः त्रिभागेनोनएव
वा श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याहगौतम.एकद्वित्रिदिनैन्र्यून
इति ऊर्मलिंशत्यष्टाविंशति सप्तविंशतिदिनेषु क्रमेणोनाब्दिकानपा

इत्यावसथिक श्रीमद्रतिसुखात्मज श्रीविष्णुमिश्रात्मजकृष्णमिश्रकृतौ श्राद्धकाशिकायांसूत्रवृत्तौ ।
सपिण्डीकरणप्रकरणम् ॥

इत्थ पार्वणैकोद्दिष्टसपिण्डनश्राद्धेष्वप्रादक्षिण्यादि धर्मानुपदिश्येदानींस्वीकृत्वेन तद्विपरीतप्रदक्षिणादिधर्मा न्प्रतिपादयिपुराभ्युदयिकश्राद्धमारभते॥

## मू० आभ्युदयिकेप्रदक्षिणमुपचारः ॥१॥

अभ्युदयइष्टापूर्त्तादुत्सवकाल स्तत्क्रियतइत्याभ्युदयिकम् तस्मिन्नाभ्युदयिकेप्रदक्षिणमितिविशिष्टनिधिः उपचारःकरणम् सवश्राद्धे सर्वमनुष्ठानम् प्रदक्षिणम्भवतोत्यर्थः अभ्युदयोवृद्धिःइत्यनर्थान्तरम ॥ तथा अग्न्याधानाभिषेकेदा विष्टापूर्त्तेष्वियाकृतौ वृद्धिश्राद्धम्प्रकुर्वीत आश्रमग्रहणेतथेति वृद्धगार्ग्यवचनात् आदिशब्दः-पुत्रजन्मविवाहाद्यर्थः तथाचसएव पुत्रोत्पत्तिप्रतिष्ठासु तन्मौंजीत्यागबन्धने चूडायांचविवाहेषु वृद्धिश्राद्धंविधीयतइति ननुच नान्दीमुखङ्कर्माङ्गञ्चेति संज्ञाभेदात्कथमाभ्युदयिकम् वृद्धिश्राद्धमित्युच्यते वृद्धिश्राद्धएवनांदीमुखमिति संज्ञाभेदःप्रयोग विशेषणार्थः तथा चवृद्धवसिष्ठः पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् तत्रनान्दीमुखमितिविशेषः समुदाहृतइति यत्तु, कर्माङ्गमिति तंज्ञान्तरं तदपिवृद्धिधर्मातिदेशेन तत्तद्रूपमेवसंज्ञाभेदेपीत्यविरोधः तथाच पारस्करः । निषेककालेसोमेच सीमन्तोन्नयनेतथा ज्ञेयंपुंसवनेश्राद्धङ्कर्माङ्गं वृद्धिवत्कृतं लौगाक्षिरपि नामान्नचौलगोदान सोमोपनयपुंसवे स्नानदानविवाहेषु नान्दीश्राद्धम्विधीयतइति अत्राभ्युदयिकइति वदतामात्मस्थापनाद्यंगेषु प्रागुदक्संस्थतैवोक्ता देवकृत्य

स्यादितिगम्यते अतएवआद्यस्य कर्तुस्तदसंस्थतायामप्यादत्ति-
क्यमपि स्यादित्याहुः तत्रापि आदत्तिक्यमेवेत्युदघ्नस्यैव कर्तृत्व-
मित्यन्ये अत्रानूचानाःप्रमाणम् अत्रैतच्चिन्त्यते किंषड्विश्राद्धान्दिन-
त्रये कार्यमुतैकदिनएवेति तत्रैकेऽप्याहुः एकस्मिन्कर्माहएवेति
मातृभ्यःप्रथमन्दद्यात्पितृभ्यस्तदनन्तरं ततोमातामहेभ्यश्च षडेता-
इत्ययंस्मृतमितिवचनादिति तदयुक्तं अस्यापिभिन्नदिनविधायकत्वं
प्रतिभानात् तथाचस्मृतिः मातृश्राद्धन्तुपूर्वेद्युः कर्माहन्येवपैतृकम्
मातामहञ्चोत्तरेद्युर्वृद्धौश्राद्धत्रयम्भवेत् वसिष्ठोपि पूर्वेद्युर्मातृकंश्राद्धं
कर्माहन्यैतृकन्तथा उत्तरेद्युःप्रकुर्वीतमातामहगणस्यत्विति नन्वेक
दिनकरणन्दिनत्रयाशक्तौ कर्तव्यमितिचेत् तदपिन तत्र-
पिपूर्वेद्युरेव विहितत्वात् तथाच पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्व-
वासरे श्राद्धत्रयमकुर्वीतवैश्वदेवन्तु तान्त्रिकमिति तान्त्रिकमि-
त्येकदिने विशिष्टविधिः षडमनुरपि अत्राभिभिन्नकालानां नांदी-
श्राद्धत्रयम्बुधः पूर्वेद्युरेवकर्तव्य मपूर्वाह्णेमातृपूर्वकमिति यत्त्वेक-
दिनएवाचरन्ति तद्वचनादर्शननिबन्धनमित्यवधेयं जातकर्मादि-
विषयम् वेत्यविरोधः पठन्तिच पुंसवनेच सीमन्तेत्यन्न चौलोपना-
यने गोदानेस्नानउद्वाहे नांदीश्राद्धम्पुरोदितइति अतश्चविहितेषु
पूर्वेद्युरेवेति तन्न अकृत्वामातृयागन्तुयः श्राद्धम्परिवेषयेत् तस्य-
क्रोधसमाविष्टाहिंसामिच्छन्ति मातरइत्यादिवचनान्मातृपूजनस्य
श्राद्धे पूर्वभावित्वात्पूजने विशेषानीचवाक्यानि दृश्यन्ते अत्रकात्या-
यनपरिशिष्टम् गौरीपद्मा शचीमेधा सावित्रीविजयाजया देवसेना-
स्वधा स्वाहामातरोलोकमातरः धृति:पुष्टिस्तथातुष्टिरात्म देवतया
सह गणेशेनाधिकाह्येताः वृद्धौ पूज्याश्चतुर्दशेति चतुर्विंशतिमते-
ब्राह्म्याद्यास्तथामत्र दुर्गाचैत्रगणाधिपः वृद्धौवृद्धौसदापूज्याः

पश्चान्नांदीमुखान्पितॄन् ब्राह्मीमाहेश्वरी चैवकौमारी वैष्णवीतथा वाराहीचतथेन्द्रीच चामुण्डाद्येवमातरः तिस्रःपूज्यापितुः पक्षेतिस्रोमातामहेतथा । इत्येतामातरःप्रोक्ताः पितृमातृत्रसाष्टमीति अतुयथाशाखंयथा जातिकुलम्बाव्यवस्थेत्यविरोधः तथाच चतुर्विंशतिमते श्राद्धेचाभ्युदयेप्राप्ते देवतास्थापनस्मृतम् । जातिधर्मकुलश्रेणिलोकानां हृदिकारकमिति तत्रमाध्यन्दिनशाखायामनुक्तत्वात्किञ्छन्दोगोक्तम् कार्यमुतान्यस्मृत्युक्तमिति सन्देहः तत्रकेच हुःपरोक्तत्वात्किञ्चिदिच्छेति तथाचसंग्रहकारः सर्वेषामपि पत्नीनांस्वगृह्योक्तंविधीयते स्वगृह्योक्तस्यचाभावेगृह्यान्तरस्वेच्छयाभवेदिति तदयुक्तं सूत्रपरिशिष्टयोरेककर्तृत्वात्तस्यान्यशाखिविषयत्वात्पारस्करमतस्याश्रयणीयत्वाच्च तथाचस्मृतिसंग्रहः । नष्टहृगादिरस्मृतिर्येषां श्राद्धादावुपलभ्यते कर्तुमर्हन्तितेसर्वेपारस्करमुनीरितमिति परेषांकरोतीतिहिव्युत्पत्तेः अतश्चगौर्यादयएवात्रशाखायामितितत्प्रकारमाह ॥ सएवप्रतिमासुचमुद्रासुलिखित्वावापटादिषु अपिचाक्षतपुञ्जे पुनेत्देवश्चपृथग्विधेरिति मुद्राहृरजतादिधातुमयीषुअक्षतपुञ्जाः यवमुष्टयः यथासम्भवयथाकुलञ्च विकल्पः व्यवस्थितविकल्पोवा जातकर्मणिबालानांनामाह्न यत्र कर्मणि निरीक्षणेप्राशने च व्यवस्थंमातृपूजनमितिवचनात् । अतएवपृथग्विधेरित्युक्तं गन्धताम्बूलवस्त्रादिभिश्चशब्दार्थः तथा कुड्यलग्नावसोर्धारासप्तधाराघृतेनतु कारयेत्पञ्चधारांवानातिनीचानचोच्छ्रितां कारयेदितिस्वार्थेणिच्स्वकर्तृत्वान्नियमार्थोवा तेननातिनीचांनचोच्छ्रितामितिमातृसंमितामेव नतासामग्रऊर्ध्वंत्वाधिकमित्यर्थः कालमाह ॥

# मू० पूर्व्वाह्णे ॥ २ ॥

श्राद्धं कुर्य्यादिति शेषः एतत्त्वसकलदेवधर्मोपलक्षणं तेनोपवीति प्राङ्मुखदक्षिणजानुपातदैवतीर्थप्रागुदकसंस्थनमस्कारादिदैवधर्मं सर्व्वोपि प्राप्नोतीत्यर्थः। तथाच प्रचेताः अपसव्यन्न कुर्व्वीत न कुर्य्यादप्रदक्षिणं प्राङ्मुखो देवतीर्थेन क्षिप्रन्देवविसर्ज्जनम् दक्षिणन्पातयेज्जानु देवान्परिचरन्सदा नियातो नहि सर्व्वस्य जानुनो विद्यते क्वचित् यथैवोपचरेद्देवांस्तथाष्टकोपि पितृनपि इष्यन्ते सबद्धैः प्राङ्मुखोदङ्मुखोपि वा तथा पूर्व्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकं एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति दैविकञ्चाद्यश्राद्धादिपुष्वैष्णवं तथाच विश्वामित्रः देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते तन्नित्यश्राद्धवत्कुर्य्याद्द्वादश्याद्दिषु यत्नत इति ननु च प्रातर्वृद्धिनिमित्तकमित्यादौ वैकल्प्यात्प्रातरेवास्य विहितत्वात्कथम्पूर्व्वाह्ण इति उच्यते प्रातः शब्देन पूर्व्वाह्णस्यैवोक्तत्वादिति वक्ष्यमाणत्वात् एवञ्च सति पूर्व्वाह्णः किन्द्वेधाविभक्तोन्हि ग्राह्यः किं वा त्रेधा पञ्चधा वा उच्यते देवमानुषपित्र्यकालापेक्षया विभागौ चिन्त्यौ द्विधाविभागएव ग्राह्य इत्यदोषः तथाच श्रुतिः पूर्व्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणा मपराह्णः पितॄणामिति नन्वेवमपि श्रुतिरेव पुनरन्यः पूर्व्वाह्णो देवाः अपराह्णः पितर इति द्विधैवाह तत् कथन्त्रिधाविभागएवेति मैवं सामान्येनास्याः श्रुतेरभ्युदयिकादन्यपितृविषयत्वात् यत्तु पितॄनप्यत्र देववदित्यतिदेशेनप्रागावर्त्तनादह्नः कालं विद्यादिति गोभिलसूत्रे एव द्विधाविभागेन मध्याह्नो विहितः समाकयज्ञादिदैवकर्मविषयः अन्यथापराह्णे पाकयज्ञसम्भवात्। तस्मात्त्रिधाविभागएव ग्राह्य इत्यदोषः तथाच श्रुतिः पूर्व्वा-

ज्ञोवैदेवानां मध्यन्दिनइति सिद्धम् तथाचगार्ग्यः ललाटसमिते भानौप्रथमः प्रहरः स्मृतः सएवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते अध्यर्धमधिकार्धं सार्धं प्रहरइत्यर्थः। अन्वाधानाभ्युदयिकेतु गालवः। पार्वणश्चापराह्णेतु वृद्धिश्राद्धंतथाग्निकमिति। अन्वाधान निमित्तमपराह्णइत्यर्थः।

## मू॰ पितृमन्त्रवर्जंजपः॥ ३॥

मधुमतीपितृसहितयोरुपलक्षणञ्चैतत्। तथाचमनुकात्यायनौ मधुव्वाताजपस्थानेकुर्यान्नतत्प्रयत्नतः। उपास्मैगायतेत्यादिस्तृचः पञ्चजनेयथा मधुमध्विति यस्तत्रनिर्जपोमितुमिच्छताम्। गायत्र्यानन्तरं सोवमधुमन्त्रविवर्जितः। नचाश्नत्सुजपेत्त्र कदाचित्पितृसंहितां अन्यएवजपःकार्यः सोमसामादिकं शुभमिति। पित्र्यमन्त्राचश्नत्सुजपे दित्यत्रोक्तास्तान्वर्जयित्वाजपः कर्तव्यइत्यर्थः। अत्रजपत्वाविशेषा दुशन्तस्त्वाऽयंतुनइत्यादीनामपि प्रतिषेधइति केचित्। आवाहनार्थत्वादनयोर्न प्रतिषेधइत्यन्ये एवञ्चमतिब्राह्मणाना मग्निस्थानीयत्वात्तच्छरीर वर्तिपित्रावाहनस्य मन्त्रयोरौचितत्वाच्च विधिरेवंयुक्तःप्रतिभाति। अन्यथामन्त्रवत्क्रियमाणानाममन्त्रकत्वेन विफलत्वापत्तेः। अत्रैतच्चिन्त्यते किंवस्वादिप्रयोगः सकर्तव्यउतनेति। अत्रशेषंपार्वणवदित्यति देशेनप्राप्नोतीति। तदयुक्तम् पितॄणांसप्यत्वरेयरूपत्वात्। तथाचस्मृतिः पितॄणांरूपमास्थाय देवाअन्नमदन्तिते तस्मात्तस्यैन दातव्यं हविर्पूर्वपुदाहभिः नांदीमुखेतिप्रयोगस्य तत्प्रतिनिधिरूपत्वाच्च। तथाचोक्तं ततनांदीमुखमिति विशेषः समुदाहृतः अपिच चतुर्विंशतिमतम् नांदीमुखमितिविशेषः सम्पादितोनान्यइत्यर्थः।

धिर्यथातथास्वधादिपदेषु स्वाहादिपदानिप्रतिनिधातव्यामीत्य-र्थः तथाचिग्रवरः कुर्यात्स्वाहास्वधास्थाने वाचनेप्रीयतामिति ह-द्धिश्राद्धे पुसर्वत्रनमोस्थेशब्दविरिप्यतइति । नचयवैस्तिलार्थाइति वद-तोयवचेपमन्त्रोपिपितृपत्ते पु स्यादित्युक्तं तिलार्थत्वेवयवैरुप दिष्ट-त्वान्नमन्त्रस्येति तिलोसीति प्रत्यक्षविरुद्धत्वाच्च अतश्चतिलोसीति-स्थानएवयवोसीत्यादि मदपृथेयःपितपात्रेप्वपीतितथाचाश्वलायनः यवोसिसोमदेवत्यो गोसवोदेवनिर्मित. प्रतमद्भिःपृक्तःपुष्यानांदीमु-खांल्लोकान्प्रीणाहिनःस्वाहेति पुराणसमुच्चयेपि अपसव्यन्नकुर्वीत श्राद्धेनान्दीमुखेक्वचिदिति अतएवोदृद्धिश्राद्धेपितृपात्रन्युब्ज-मित्याज्ञस्तद्विशेषवचनानवलोकनात् अन्यथमितृग्रपेक्षणीयं तथाचि-ग्रवरः अपसव्यंपित्र्यमंत्रस्यामजानुनिपातनम् नुतर्जपात्रन्नकर्त्त-व्यंहृद्धिश्राद्धेषुसर्वदा वसिष्ठोपि दत्त्वापिण्डान्नकुर्वीत पिण्डपात्र-मधोमुखमिति तथा ;गुडेधूपःप्रयत्नेनपुष्पाण्येवोत्तमा निचइति ॥

## मू० सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्न-मितीतरेब्रूयुः ॥ ६ ॥

तृप्तास्थस्यतृसंपन्नमितिवदेदित्यर्थः (१) साकांक्षत्वात्सुसंपन्नमि-तिप्रतिवचनम् एतच्चपाकश्राद्धएवनामान्ने तत्रै तदसम्भवात् त-थाच आमश्राद्धमनंगुष्ठ मग्नौ करणवर्जितम् तृप्तिप्रश्नविहीनन्तुक र्तव्यंमानवैर्ध्रुवमिति विहितस्वविकल्पे नामश्राद्धम् तथाचहृद्ध-याज्ञवल्क्यः आमश्राद्धंप्रकर्त्तव्यं हृद्धौनान्दीमुखेसदा पाकेनवाव-हिःशालैः मधुरक्षदरंदधीति अत्रयथाकुलयथासम्भवंवाविकल्पः अत्रैतच्चिन्त्यते किमामश्राद्धे पिण्डदानमामे कार्यमुतपाकेनेति तत्रैकथाहुः आमश्राद्धंयदाकुर्या । द्विधिज्ञः श्राद्धदस्तदा तेना ।

(१) सुसम्पन्नमितिप्रोक्तशेषमन्नं निवेदयेत् ॥

ग्नौकरणंकुर्यात्पिण्डांस्तेनैव निर्वपेत्। दद्यात्तदितिद्विजातिभ्यः।
शूतस्याथदिवाशृतं तेनाग्नौकरणंकुर्यात्पिण्डांस्तेनैवनिर्वपेत्इति
मत्स्यपुराणव्यासवचनाभ्यां मामेनविहितत्वादामेनैवेति। तद-
युक्तं यामश्राद्धं यदाकुर्यात्पिण्डदानंकथम्भवेत्। गृहपाकात्समु
द्धृत्य सक्तुभिःपायसेनवेति पाकेनविहितत्वात् एवन्तर्हि विक-
ल्पोस्त्विति अव्यवस्थासंभवे ऽष्टदोषदुष्टत्वात्। तस्मात्द्विजकर्तृ-
केपाकेन शूद्रकर्तृक आमेनैतिव्यवस्थोत्पद्येत तन्नातीवशोभते।
साग्निनिरग्न्योर्विषया व्यवस्थोपपत्तेः तस्मात्साग्नेः पाकेनाग्नौ
करणं पिण्डौनिरग्नेरामान्नेनैतिव्यवस्था अथवायथाकुलमिति।
यत्र आमेनपिण्डांदद्यात्तौ विप्रान्पक्वेनभोजयेत्। पक्वेनकुरुतेपि-
ण्डान्विप्रे ष्वामं प्रयच्छति तावुभौमनुनाप्रोक्तौ नरकार्हौनिसंशयः
तस्माद्विपर्ययम्विद्वान्नकुर्याच्छ्राद्धकर्मणीति तच्छ्राद्धान्तरविषयं॥

## मू० दधिबदराक्षतमिश्राःपिण्डाः॥७॥

अक्षतायवा. मिश्रयामिश्रः दध्यादिभिर्मिश्रितोदनेन पिण्डा-
देयाइत्यर्थः। बहुव्रीह्युपलक्षे अन्ये त्वाहुः दध्यादित्रयमेव मेल-
यित्वादेयाइति तदयुक्तम् शाल्यन्नस्यविहितत्वात् तथाचांगिरा.शा
ल्यन्नं मधुसंयुक्तं बदराणियवास्तथा मिश्राणिक्षत्वाचत्वारि पिण्डा
(१) न्श्रीफलसंमितान् दद्यादिति कात्यायनोपि सर्वस्मादन्नमधृ-
त्य व्यञ्जनैरुपसिच्यच संयोज्ययवकर्कन्धु दधिभिःप्राङ् खलतइति
पिण्डयज्ञवामपिण्डकर्म्युदासार्थं एतच्च साग्निविषयं तथाचनिगमः
आहिताग्नेःपिवर्चनं पिण्डैरेवेति स्मृतिरपि योग्नौतुविद्यमानो-
ऽपि व्रीहीपिण्डान्निर्वपेत् पतन्तिपितरस्तस्य नरकेमतुपच्यतइति
यस्तु पिण्डनिर्वपणाद्धुर्यान् नवाकुर्यात्सराधिपेति भविष्यवचनं।

(१) श्रीफलंबिल्वम्॥

यच्च वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतमिति वचनं तन्निरग्नि-विषयं तथा च यावन्नाचाग्निसम्बन्ध उत्पन्नाग्निस्तथैव च तावद्वृद्धिषु सर्वासु कल्पश्राद्धमपिण्डकं अत्रविशेषः पिण्डहीनेपि कर्त्तव्यम् विकरप्रावपूरण अग्नौकरणमर्घ्यञ्च त्येतच्छ्राद्धे चतुष्टयं वर्जनेपि पिण्डहीनेपि सर्वमर्घादिकम्भवेत् कुशांस्थाप्यास्वधां कुर्यात् द्विपदस्तौ-जलेपिवेति यत्तु मङ्गल्यन्तु यदा कुर्यान्नकुर्यात्पात्रपूरण मित्यादि तत् श्राद्धान्तरविषय अपिण्डकन्तथा देशकुलाचारविषयञ्च वृद्धिश्राद्धे कुलाचार देशकालाद्यपेक्ष्य हीति भविष्यद्वाक्यविशेषात् अत्रत-च्चिंत्यते किमत्रावनेजन मुदकेनदेयमुतान्यद्रव्येणेति तत्रैके-आहुः तत्पात्रक्षालनेनाथपुनरप्यवनेजयेदित्यनेन पिण्डपात्रक्षा-लनजलेनैवेतिअन्येत्वाहुः क्षालनोदकस्य छन्दोगविषयत्वात् उद-केनैवेति तदुभयमपि विशेषवचनानुपलब्धि निबन्धनमित्यवधेयं क्षालनोदकस्य प्रत्यवनेजनविषयत्वात् क्षीरेणविशिष्टविधानाच्चेति तथाच प्राङ्मुखस्त्वथदर्भेषु दद्यात्क्षीरावनेजनं दधिबदरयवमधु-युक्तं श्रीफलसन्निभं तथाचार्घ्योदकस्थाने दद्यात्क्षीरयवोदकमिति-ब्रह्मपुराणवचनात् अतश्चक्षीरेणैवेति पुनश्चिंत्यते पिण्डदानमपि किन्देवतीर्थेनाहोस्वित् प्राजापत्येनेति तत्रैकआहुः दध्यक्षतैः स-वदरैः प्राङ्मुखोदङ्मुखोपिवा देवतीर्थेनवैपिण्डान्दद्यात्कायेनवा-न्वपे ह्यनेनोभयतीर्थस्य विहितत्वाद्विकल्पएवेति । अन्येत्वाहुः । छन्दोगादेवतीर्थेन वाजसनेयिप्रभृतयः प्राजापत्येनेति तथाच-मार्कण्डेयः नान्दीमुखानांकुर्वीत प्राज्ञः पिण्डोदकक्रियाः प्रा-जापत्येन तीर्थेन यच्चकिञ्चित्प्रजापतेरिति अत्रामूलानाः प्रमाणा पिण्डोदकव्यतिरिक्तं देवतीर्थेनपिण्डोदकम् प्राजाप-त्येनेतिव्यवस्थाया अत्रविशेषमाह स्मृतिः । षड्मातृकपुत्रोवः

मार्देष्वष्टकादिषु सर्वासांनामसंकीर्त्य पिण्डमेकंसनिर्वपेत्। पुराणसमुच्चये एकस्यबह्वीभार्या एकपुत्रस्तथायदि एकेनापि-वपुत्राद्या: सर्वासांपिण्ड:स्नुषः वह्वीनामेकपत्नीना मेकाचेत्पु-त्रिणीभवेत् तेनपुत्रेणपुत्रिण्य: सर्वास्तामनुरब्रवीत् इति अत्रे तत्सं-दिह्यते किमर्घदानेपिण्डद्देकत्वं स्ववेनानोद्देय: किंवापृथग-र्घाइति तत्रैकेआहु: अर्घस्यपिण्डवद्विधानमेवेति तदयुक्तं अर्घ-दानस्यपक्षो ने,प्रदेशात् तथाचगालव: अनेकमातरोयस्य श्राद्धेचा-परपाक्षिके अर्घदानंपृथक्कुर्या त्पिण्डमेकन्तुनिर्वपेदिति अप-रपाक्षिकइतिश्राद्धान्तरोपलक्षणम् अत्रैके दाक्षिणात्याश्शिष्टा:-हेपु प्रपितामहमारभ्यार्वाचीनम् पिण्डदानादिप्रयोगमाचरन्ति-नान्दी मुखेविवाहे च प्रपितामहपूर्वक्रम वाक्यंसमुच्चरेद्दिवा नन्य-त्रपितृपूर्वकमितिवचनादिति तदनुचितम् नान्दीमुखा:पितर:पि-तामहा:प्रपितामहा:प्रीयंतामित्यादिप्रयोगस्यकात्यायनेनपितृमभृ-त्युत्तरोत्तरक्रमेणाभिहितत्वात् श्राद्धपरिशिष्टे उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तर: । भवेदवश्याधरणा माधार: श्राद्धकर्मणि तत्रश्राद्धे पुत्रवत्पु वृद्धिमत्स्वितरेषुच स्तलमध्यायदेशे पु ईयत्स्व-ग्राञ्चनिर्वपेदिति उत्तरोत्तर: पुत्रपौत्रादिभि: समृद्ध:अधराणाम-ग्रमध्यमूलक्रमेणाधोदानेनाधारा: पुत्रादिभिर्हीनोभवेदित्यर्थ: त-स्मादन्यशाखायां तन्नोचितमिति यत्तु नान्दीमुखेविवाहेचेति व-चनन्तदन्यशाखिविषयम् देशकुलधर्मादिविषयत्वेत्यविरोध: अत्रै-तच्चिन्त्यते वेदिकाया लेखालयम पिण्डदानञ्च किमुदकांसं क-र्त्तव्यमुतदक्षिणासंस्थमिति तत्रैकआहु: अपूर्दक्षिणात्वेपि अस्य-श्राद्धस्यदैविकत्वा दुदक्संस्थमेवेति तदयुक्तम् आभ्युदयिकेप्रद-क्षिणमुपचारइतिविरोधाच्च नचोदक्संस्थतायाम् प्रमाणमुपल-

अन्दक्षिणासंस्थत्वेच पूर्वक्षिणप्रमाणमस्त्विति तथाहदक्षिणासंस्थमेव रेखायांपिण्डदानादि तथाचकात्यायनएव द्वितीयस्तृतीयश्च म बादगाग्रदेशयोः मातामहादिप्रभृतीन् एतेषामेववामतइति एतेषांपित्रादित्रयाणाम् वामतइत्यन्वयः तत्पित्रादीनांमध्ये यत्वेनसम्बोधात्वेनच स्वसंमुखत्वाहदक्षिणासंस्थत्वेनतेषांवामता यत्वाशादित्वेन पिण्डानामश्रयणाभावादामतायां कर्तृगतोवयवइप्यतइत्युक्तम् तदसङ्गतम् एतेषामेववामत इत्येतच्छब्देन पित्रादीनांपरामृष्टत्वात् कर्तुरवयवत्वेतु एषामितिचबहुत्वविरोधाच्च तस्माद्दक्षिणासंस्थत्वेनैतद्वामतासम्भवः कृत्वार्थेष्टद्वयान्तवचः ओकारं रिवामांगे भर्तरर्भारिदक्षिणइति अपिचस्मृत्यंतरं श्राद्धेसदैववामाङ्के पत्नीनाम्दर्भहरेत् वृद्धिश्राद्धे पुनारीणां दक्षिणांगेसदाभवेदिति श्राद्धेसदैववामांग इत्येतदापसंत्रादिविषयं तेषाम्पित्रादिपिण्डपश्चिमतस्तपत्नी पिण्डविधानात् तथाचापस्तंबगृह्यं ॥ द्विधाभूतं यथाभवति तथासदक्षिणाग्रान् दर्भानुल्लिखित देशेसंस्तीर्य तत्रपूर्वभागेपित्रादि वर्गार्थंस्तरणं पश्चाद्भागेतु मात्रादिवर्गार्थमिति स्त्रीभ्यश्चपिण्डाइत्यपश्चिमाःस्युः इतितद्वृत्तभाष्यार्थसंग्रहकारः वृद्धिश्राद्धेपुनारीणां दक्षिणांगेसदाभवेत् इतितुसर्वविषयं तस्माद्रेखापिण्डदानादिकम् प्राङ्मुखकर्तृदक्षिणासंस्थमेववृद्धिश्राद्धेषु सर्वत्रकर्तव्यमितिसर्वमनवद्यम् ब्राह्मणनिवेशनायेवं प्रागारभ्य पश्चात्संस्थमेवेति ॥

## मू० नान्दीमुखान्पितॄनावाहयिष्यइति पृच्छत्यावाहयेत्यनुज्ञातो ॥ ८ ॥

लिङ्व्यत्यलट् अत्र तद्वृत्तय्यं किम्पित्रादिविकल्प नांदीमुखार्थ श्राद्धेस्वित् वृद्धप्रपितामहादिविकल्प इति स्मृतिपूभयथादर्शनात्।

तथाचब्रह्मपुराणम् पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रु-
मुखाएते पितरःपरिकीर्तिताः तेभ्यःपूर्वतराश्चेव प्रजावन्तः सुखै-
धिणः तेतुनान्दीमुखानान्दी मत्हद्धिरितिकथ्यते प्रसन्नमुखसंसर्गा
न्नान्दीयांस्ततस्तुतइति । तत्तश्चवृद्धप्रपितामहादिमुखत्वेना-
श्रुदयिकत्वंप्राप्नोति अथवा पितापितामहश्चैव तथैवप्रपिताम-
हः॥ पिण्डसंबन्धिनोह्येते पितरः परिकीर्तिता इत्यादिवचनैर-
श्रुमुखानामेव पिण्डसम्बन्धित्वा त्पित्रादित्रिकस्यापि नांदीमुख-
त्वमिति तथाचसूत्रम् ॥ नांदीमुखाः पितरःपितामहाःप्रपि-
तामहाइति मार्कण्डेयोपि येभ्यःपितामहादूर्ध्वं तेस्युर्नान्दीमु-
खाअपीति प्रपितामहस्यापि नान्दीमुखत्वं नष्टद्धादित्रिकस्यैवेति
एवंचसत्युभयेषामपि नांदीमुखत्वमविरुद्धम् यत्त्वाश्रुमुखादिमं-
त्राकीर्त्तनन्तत्त्वात्कारणपरम् प्रसन्नमुखसंसर्गादित्यादिना नान्दी-
मुखाःवंशदृद्धिमीहन्ते अश्रुमुखास्तुपिण्डदानसमर्थाः सन्ततिमिति-
ब्राह्मेनिरूपितत्वत् तस्माज्जीवत्पितृमातृमातामहादिकस्य कर्-
त्तुरधिकारार्थं दृद्धप्रपितामहादिकस्य नान्दीमुखत्वकीर्त्तनं द्द-
तपितृमातृमातामहादिकस्य कर्त्तुरधिकारार्थं सश्रुमुखानांनां-
दीमुखत्वमितिव्यवस्थेत्यविरोधः तथाच चतुर्विंशतिमतम् नांदी-
मुखेविवाहादौ प्रपितामहपूर्वकम् । वाक्यं समुच्चरेद्विद्वानन्यत्रपि-
तृपूर्वकं जीवत्पितृकःप्रपितामहपूर्वकं मन्दत्वमृतपितृकः पितृपूर्व-
कमित्यर्थः दाक्षिणात्यास्तुप्रपितामह पितामहपितरितिक्रमह-
ध्यर्थमेतदित्याहुः कात्यायनोपि जीवन्तमतिदद्याद्वा प्रेतायान्नो-
दकेद्विजः पितुःपितृभ्योवादद्या त्सपितेत्यपराश्रुतिः ब्राह्मेपि उक्त-
मादायपिण्डंतु कृत्वाविल्वप्रमाणकं दद्यात्पितामहादिभ्यो दर्भसू-
त्रियथाक्रममिति पठन्तिच जनन्यांविद्यमानायाम् यजेदासपि-
तामहीं मातृमःसचविज्ञेयो दृद्धिश्राद्धेतेकचिदिति ग्रतश्चजीव-

वतिपत्रादिर्मन्तिलिकस्यापि इद्धिश्राद्धे धिकारइतिसिद्धम् अतएक-
आहुः पितृमातृमातामहानांमध्ये योजीवतितद्वर्गंपरित्यज्य पा-
र्वणद्वयमेकंवा यथासम्भवङ्कर्त्तव्यं त्रिषुजीवत्सु मातृपूजनमेव-
नश्राद्धमिति तथाच पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेद्य-
यदिवर्गादौ तद्वर्गन्तुपरित्यजेत् इति तथाच सपितुःपितृकृत्येतु
अधिकारोनविद्यते नजीवन्तमति क्रम्य किञ्चिद्दद्यादितिश्रुतिः
तथा पित्र्यज्जीवत्पितुर्नास्ति मन्त्रौहोमोपिपार्थिवः नजीवन्तम-
तिक्रम्य किञ्चद्दद्यादितिश्रुतिरिति जीवत्पितृकस्यहोमान्तम-
नारम्भोवेत्यादिवचनेभ्य इति ॥ यत्तु उद्वाहेपुत्रजनने पित्र्येष्टांमौ
मिकेमखे तीर्थेब्राह्मणमायाते षडेतेजीवतः पितुरिति मैत्रायणी
यप रिशिष्टं तन्मैत्रायणीयशाखिनां साग्नीनामेव नजीवत्पितृकः
कुर्याच्छ्राद्ध मग्निमृतेद्विजः येभ्यएवपितादद्यात्तेभ्यः कुर्वीतसा-
ग्निकइति सुमन्तुवचनेननिरग्नेर्जीवत्पितृकस्य श्राद्धानधिकारा-
दिति अवोचाम यदुक्तम् पितृवर्गेमातृवर्गे तथामातामहस्यचे
त्यादि तन्नजीवद्वर्गपरित्यागस्य तीर्थब्राह्मणसम्पत्त्यादौनिरग्निजी-
वत्पितृकविषयत्वेनचरितार्थत्वात् तथाचाधिकारमाह महानदी-
षुसर्वासु तीर्थेषुचगयांविना जीवत्पितापिकुर्वीत श्राद्धम्पार्वणधर्मव
दिति यच्चोक्तं त्रिषुजीवत्सुमातृपूजनेनैवश्राद्धसिद्धिरिति तदप्यसं-
गतम् अङ्गिनः श्राद्धस्यलोपेङ्गस्य मातृपूजनस्यप्रसक्त्यभावर्योपपत्तेः
नचश्राद्धमन्तरेणमातृपूजायाः कर्मणोङ्गत्वम् यच्चाभाधायिसपितुःपि
तृकृत्येष्वित्यादि निषेधवचस्तद्वृद्धिश्राद्धादन्यश्राद्धविषयत्वात् तथाच-
क्रतुःअष्टकासुचसंक्रान्तौ मन्वादिषुयुगादिषु चन्द्रसूर्यग्रहेपाते स्वेच्छ
यापूज्ययोगतः जीवत्पितानैवकुर्यात् श्राद्धङ्काम्यन्तथाखिलं अखिल-
मिति। व्यतीपातोजन्मऋक्षं चन्द्रसूर्यग्रहौतथा तिथिनक्षत्रवारांश्च

उद्दिश्याभ्युदयन्तथा एतांस्तुश्राद्धकालान्वैकाच्यानाह प्रजापतिरित्या
दिकं आभ्युदयआरामसहादानायुत्सवः यत्वाम्नातं नजीवत्पितृकः
कुर्यात् श्राद्धमग्निमृतेद्विज इत्यनेननिरग्नि जीवत्पितृकस्य श्राद्ध-
निषेधइति तदपिन उद्वाहेपुत्रजननइत्यत्र साग्निशब्दाभावान्नि-
रग्निविषयत्वोपपत्तेः उक्तञ्चअनग्निकोपिकुर्वीत जन्मादौवृद्धिक-
र्मणीति यत्र नजीवत्पितृकइत्यनेन साग्निजीवत्पितृकस्य श्राद्धवि-
धानं तत्राष्टकादिनियत श्राद्धविषयं नसामान्येनसर्वश्राद्धविधायकं
तथापरपक्षादिश्राद्धनिषेधानुपपत्तेः यदप्युक्तं जीवत्पितृकस्यहोमांत
मनारम्भोवेति तत्राग्नेः पिण्डपितृयज्ञादि निषेधविषयंनाभ्युद-
यिकमेवेति। तेभ्यःपूर्वतरायेवेइत्यादिना भ्युदयिकस्य प्रतिप्रस-
वोपपत्तेः तस्माज्जीवत्पित्रादि त्रिकस्याभ्युदयिकं श्राद्धकर्तुमुचि-
तमितिसिद्धम् ॥

## मू० नान्दीमुखाःपितरः प्रीयन्तामित्य क्षय्यस्थाने ॥ ८ ॥

अत्रनांदीमुखान्पितृनावाहयिष्य इत्यनेनैवनांदीमुखत्वात्प्राप्तौ
पुनस्तद्ग्रहणंसर्वत्रप्रयोगार्थं तदुक्तं तत्रनांदीमुखमिति विशेषःस-
मुदाहृतइति प्रकृतिश्राद्धेत्वक्षय्योदकदानन्तु अर्घदानवदिष्यते।
षष्ठ्यैवनित्यन्तत्कुर्यात् नचतुर्थ्याकदाचनेति कात्यायनेनषष्ठ्यन्तत-
न्त्रयोर्विहितत्वादवतन्निषेधोवाचनिकः। तेनप्रथमाविभक्त्यातन्त्रेण
चाक्षय्योदकदान, मत्रक्षीरयवोदकैर्भवतीत्यर्थः। तथाच तथाक्ष-
य्योदकस्थानेदद्यात् क्षीरयवोदकमिति पितृग्रहणं सपित्न्यर्थं
तेनजीवत्पित्रादिकोपि स्वमातृमातामहादिभ्यएव दद्यान्नपितृ
संबन्धिभ्यइत्यर्थः अत्रकेचाहुः अनग्निकोपिकुर्वीत जन्मादौवृद्धि

कर्माणि येभ्यएवपिता ददयात्तानेवोद्दिश्यपार्वं यमित्यादिवचनेषु यत्त्वच्छन्दनिर्द्देशा त्पितृभ्यएवददयान्नस्वपितृभ्य इतितदयुक्तं स्वपितृभ्यःपितादद्यात्सुत संस्कारकर्मस्विति कात्यायनेन प्रादुर्भावे पुत्रजन्मोगृहणे चन्द्रसूर्ययोः स्नात्वानन्तरमात्मीया न्पितृन्श्राद्धे न तर्पयेदिति कार्ष्णाजिनिनाच स्वपितृभ्यएवश्राद्धविधानात् नच मातृमातामहादिकं परित्यज्य पितृनेवभ्यिभ्योदातुमुचितं अतश्च स्वपितृभ्यएवेतिसूत्तम् ॥

सू० नान्दीमुखान्पितॄन्वाचयिष्यऽइति पृच्छतिवाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरःपितामहाः प्रपितामहाः नान्दीमुखा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ ८ ॥

अत्रप्रथमोद्दिष्ट नान्दीमुखशब्देन वृद्धप्रपितामहादित्रिकस्येव नान्दीमुखत्वंमाभूदित्य श्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणं एवंमातादिष्वपि अतएवमन्ते पितर पितामहाइति बहुत्वमुक्तं चकारोमातृवर्ग प्राप्त्यर्थं तथाचब्रह्मपुराणे मातामहेभ्यश्चतथानान्दीवक्त्रेभ्यएवच अथनांदीमुखीभ्यश्च मातृभ्यःश्राद्धमुत्त ... । ननुचाभ्युदयिके मातृश्राद्धस्यपूर्वंभावित्वा त्पितृग्रहणं ... उचारते अग्निहोत्रंजुहोति,यवागूंपचतीति वत्पाठोर्थेनबा- ... मातृश्राद्धन्तु ... । त्पितृणान्तदनन्तरम् ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृत मित्यादिच अतश्चनांदीमुख्योमातरः प्रीयन्तामित्यादिक्रमेणयथा-

जिकप्रयोगः अत्रैतत्संदिह्यते किमत्रनवदैवत्यं श्राद्धमुतद्वादशदैवत्य-मिति उभयथावचनदर्शनात् तथाहि मातृभ्यः प्रथमन्दद्यात्पितृभ्य-स्तदनन्तरं ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृतमित्यादि चतुर्विंश तिमतेतुमातृपूर्वान्पितॄन्पूज्य ततोमातामहीस्तथा मातामहान्ततः केचिदेवंयुग्मांस्तुभोजयेत् पुराणसमुच्चयेपि शस्तंनांदीमुखंश्राद्धमपि-ण्डैर्द्वादशभिःप्रदातथापि दधिदूर्वाक्षतयवैर्बदरैरामिश्रितैःपिण्डा नांदीमुखे देयामातृपूर्वाश्चद्वादशेति एवंविप्रतिपत्तौ यथाशाखं-यथाकुलन्देशंवाव्यवस्थेत्यविरोधः तुल्यविकल्पोवा अथवाधनधान्य पुत्रपश्वादि वृध्यर्थंक्रियमाणम्वृद्धिश्राद्धं अन्याधानाद्यभ्युदयनिमि-त्तमाभ्युदयिकमितिभेदः । तत्र वृद्धिश्राद्धन्द्वादशदैवत्यं आभ्युदयिकं नवदैवत्य मितिव्यवस्थेति अन्वष्टकायांयच्छ्राद्धं यच्छ्राद्धम्वृद्धिहेतुकं पित्रादीनांपृथग्दानं स्त्रीणांपिण्डः पृथक्पृथगिति अत्रवृद्धिहेतुक-मित्यभिधानात् तथा शरीरोपचयेश्राद्धं सर्वोपचयएवच पुष्ट्यर्थमि-तिविज्ञेय मौपचारिकमुच्यते तथा नक्षत्रग्रहपीडासु दुष्टस्वप्नाव-लोकने इच्छाश्राद्धानिकुर्वीत नवसस्यागमेतथेतिवचनादिति ॥

## मू० नस्वधाम्प्रयुञ्जीत ॥ १० ॥

निषेधांतरोपलक्षणञ्चैतत् तेनशर्मादिकमप्यत्र नप्रयुंजीते-त्यर्थः तथाचपुराणसमुच्चये नस्वधाशर्मवर्मेति पितृनामनचोच्चरेत् नकर्मपितृतीर्थेन नकुशाद्विगुणीकृताः नतिलैर्नापसव्येन पित्र्यम-न्त्रविवर्जितं अस्मच्छब्दंनकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अतश्च नांदीमुखपितरमुकगोत्रे त्यादिप्रयोगः । अन्येतुपार्वणवन्नामश-र्मादिक मपिप्रयुंजते तन्निषेधदर्शनात्कथमितिचिंत्यं पार्वणव-दित्यतिदेशाद्दातविधिः अत्रकश्चिदाह प्रकृतेस्वधावाचनेस्वधांन-

प्रयुंजीतेति निषेधइतितद्युक्तं सामान्येनाभुग्रदयिकेतन्निषेधात् ॥

## मू॰ युग्मानाशयेदत्र ॥ ११ ॥

अत्राभुग्रदयिकेयुग्मान्द्विचतुरादीन्विप्रानाशयेद्भोजयेदित्यर्थः अस्यदैविकत्वाद्दैवे युग्मान्यथाशक्ति इतिपरिभाषयैवयुग्मत्वप्राप्तौ विशिष्टविध्यर्थंयुग्मग्रहणम् तेनपित्र्येपि युग्मानेवप्रातर्निमंन्त्याशयेदित्यर्थः तथाचकात्यायनः प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथेति अन्यच्च ज्येष्ठोत्तरकरान्युग्मान्कराग्रापपवित्रकान् कृत्वार्घसम्प्रदातव्यं नैकैकस्यात्प्रदीयतइति युग्मानितिपुंस्त्वमविवक्षितम् तेनयुग्माभावेस्त्रियोपीत्यर्थः तथाच मातृश्राद्धे तुविप्राणाम लाभेपूजयेदपि पतिपुत्रान्विताभव्या योषितोष्टौकुलोद्भवाइति हेमाद्रिसिद्धवचनात् शंखोपि पित्रादित्रयपत्नीसु भोज्यामातृप्रतिद्विजैः। स्त्रीणामेवतुतस्मा न्मातृश्राद्धमतःस्मृतमिति आशयेदित्यपिविशिष्टविध्यर्थं तृप्तिप्रश्नेनैवभोजनोपलब्धेः अतश्च गुडशर्करादिनामधुरान्नम् भोजयेदितिविशिष्टविधिरित्यर्थः तथाचभविष्यत्पुराणम् ब्राह्मणेभ्यस्ततोदद्या द्भोजनंमधुरञ्च गुडमिश्रंसितायुक्तं संघृतञ्चोदनम्परं सरस्नान्मोदकांश्चैव नचाम्लकटुकांस्तथा कृष्णात्रेयोपि अन्यश्राद्धे प्रदातव्यं नमांसम्मातृपूजनमिति अपिच अपसव्यं जानुपात मन्त्रमांसविवारिजम् रक्तं विवर्जयेद्दर्भान्समूलांश्चतिलानपीति तथा द्राक्षामलकमूलानियवांश्चाथनिवेदयेत् तामेवदक्षिणार्थं तु दद्याद्विप्रेषुसर्वदेति ब्रह्मपुराणम् अतश्चद्राक्षामलकमूल यवनिष्क्रयिणींदक्षिणां युवाभ्यांसम्प्रददइत्यादिप्रयोगः नैकैकस्यात्प्रदीयतइत्युक्तेः तथाभ्युदयिकश्राद्ध सन्देहोनिरस्यते तत्रकात्यायनः स्वपितृभ्यःपितादद्यात्सुतसंस्कार-

कर्मसुपिण्डानोद्वाहनात्तेषान्तस्याभावेतुतत्क्रमादिति अस्यार्थः
पिण्डशब्दः श्राद्धं लक्षयति आउद्वाहनादित्याङ भिविधौततश्च-
पुत्रस्यनिषेकादिप्रथमविवाहपर्यन्तेषु संस्कारकर्मसुपिता स्वमातृ-
स्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात् नपुत्रमातृमातामहादिभ्यः
तस्यपितुरभावेतेषामपि तुभ्रात्रादीनामेवनवानां तत्क्रमादेवनक्र-
मेणपित्रादीनान्तेनैव क्रमेणाधिकारीज्येष्ठभ्रातादिरपिदद्यादिति
नन्वेवंसतिसंस्कार्यस्य पुत्रादेर्मृतपित्रोः श्राद्धादौमुख्याधिकारित्वा
त्तदतिक्रमोनायुक्तइति नचजीवत्पित्रोर्ह्यनुष्ठानक्रमः समृतपित्रो-
रप्युचितत्वादितिवाच्यं प्रेतेभ्योदद्यादित्यादिवचनैः प्रेतानामवश्य-
देयत्वात् तस्मात्तेषान्तस्याभावेतुतत्क्रमादित्यस्यतत्क्रमात्तदुपक्रमा
न्मृतपित्रादिमारभ्यैवश्राद्धम् भ्रातादिरप्यधिकारीकुर्यादित्येवार्थः
तस्याभावेसुतः क्रमादितिपाठेपितदर्थस्यप्रतीयमानत्वाच्चेति ।
अत्रोच्यते असंस्कृतास्तुसंस्कार्याभ्रातृभिः पूर्वसंस्कृतैरित्यादिनाभ्रा-
त्रादयः पित्रभावेप्रतिनिधित्वेना विधीयन्तेप्रतिनिधेश्च सतद्धर्मा-
कर्मयोगादितिकात्यायनपरिभाषायांपितृधर्मप्राप्तेर्भ्रात्रादिः पितृ-
समानधर्मेति किञ्चतस्याभावइति अभावः पञ्चविधः प्रागभावः
प्रध्वंसाभावः सन्निध्यभावः अधिकाराभावः अत्यन्ताभावश्चेति
नवसंस्कार्येसतिप्रागभावात्यन्ताभावयोरसम्भवएव प्रध्वंसाभावस-
न्निध्यभावाधिकाराभावानांसम्भवोस्तीति तत्रसर्वत्रापिवचनबलात्
पितुः पितृभ्यः प्रदानम्विधीयतेनसंस्कार्यपितृभ्यः तथाचस्मृतिः ।
पितरोजनकस्यैवयावद्व्रतमनाहितम् समाहितव्रतः पश्चात्स्वान्यजे-
तपितामहानिति पितामहानितिपित्राद्युपलक्षणम् तथान्यास्म-
प्यविहतेतातेपतितेषण्ढवर्जिते व्युत्क्रमाच्चमृतेदेयं येभ्यएवददा-
त्यसावित्यादि यत्तुप्रेतेभ्योदद्यादितिवचनन्तदधिकारसम्भवविषयं

अधिकारस्तस्य सहायत्वेन विवाहानन्तरम् स्वपितृभ्योदातुमस्तीति तथाच ऋष्यशृङ्गः नाश्नातियोद्विजोमांसं यस्तुनोदारसंग्रहः तावेतौ मुनिभिः प्रोक्तौ अनर्हौ निखदृपकाविति नाश्नातिमांसंश्राद्धे। इति-शेषः ननुच समाहितमतः पश्चात्स्वान्यजेतपितामहानित्यनेनोप-नयनादूर्ध्वंस्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमितिच्य-च्यते उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्त्रन्तराभावएकपुत्रविषयः कर्त्रन्तरसद्भावेतु प्रतिनिधिभूतःसएवतदाद्यविवाहपर्यंतंसंस्कार्यस्य पितृभ्यएवदद्यादिति तथाचमनुः श्राद्धंकुर्यादवश्यंतुप्रमीतपि-तृकोद्विजः व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदीति तस्मात्युक्तमुक्त-म्पिवभावेप्रतिनिधेःप्रतिधर्मं प्राप्यासंस्कार्यस्यपितृमातृपितामहेभ्यः श्राद्धंदद्यादिति तथाचस्मृतिः नान्दीश्राद्धंपितादद्यात् दादेत्रपाणि-ग्रहेबुधः अतऊर्ध्वं प्रकर्त्तव्यम् स्वयमेवतुनांदिकमिति। अपरमपि पित्रोस्तुजीवतोःपुत्रः कुरुतेदारसंग्रहम् पितुर्नांदीमुखंप्रोक्तम् अपु-त्रस्यकथस्तनेति ननुपित्रोर्जीवतोरेव तत्पितृभ्योनान्दीमुखंप्रोक्तं मृतयोस्त्वन्यःकरोतीति तत्कथंसंस्कार्यस्यपितॄणामतिक्रमो युक्तः सत्यं उद्वाहनादित्रवविनापितृपितृभ्यएवविधाना स्मतद्धर्मतिप-रिभाषया प्रतिनिषेधस्तद्वक्रमस्य वाचनिकत्वात् अपिच वच-नांतरं कन्यापुत्रविवाहेषु प्रवेशेनववेश्मनः नामकर्मणिबालानां चूडाकर्मादिकेतथा सीमन्तोन्नयनेचैव पुत्रादिसुखदर्शने नान्दीमु-खम्पितृगणम् पूजयेत्प्रयतोगृही तिगृहएवोपदेयात् चूडाकर्मादि-कइत्यादावविवाहपर्यंतंवेदितव्यं तदूर्ध्वंतु द्वितीयविवाहादावपि सर्वत्रजीवत्पितृकःपितृपितृभ्योमृतकस्वपितृभ्यइतिविवेकः तत-स्वायमर्थः पितास्वपुत्रस्यनिषेकादि विवाहपर्यंत संस्कारकर्मसु स्वमातृपितृमातामहेभ्यःश्राद्धंकुर्यात् पितुरभावेसंनिहिते वाधि-

स्तस्मादापःपीताः केवल्योनपिबन्ति यदेवेभ्यः सएष्टोभवंत्व-
थैवविचिन्वंतीत्यन्वयव्यतिरेकेणार्थवादइति श्रोषध्योधान्यानि ।
तथाचश्रुतिः दशग्राम्याणिधान्यानिभवंति ब्रीहियवास्तिलमाषा
श्रणुप्रियंगवोगोधूमाश्चमसूराश्च खल्वाश्चखलुकुलाश्चेति अयमर्थः
ब्रीहयस्तण्डुलधान्यानि तानिचश्वेतरक्तवर्णानि श्राद्धेदेयानि
कृष्णधान्यानिसर्वाणि वर्जयेच्छ्राद्धकर्मणीतिनिषेधात् प्रचेतास्त्वाह
कृष्णमाषास्तिलाश्चैव श्रेष्ठाःसुर्यवशालयः महायवाव्रीहियवा स्तथै-
वचमधूलिकाः कृष्णाश्वेताश्चलोहाश्च ग्राह्याःस्युः श्राद्धकर्मणि ।
एतद्व्याख्यातंमाधवीये यवाःसितदीर्घशूकाः महायवाव्रीहियवा
श्चयवविशेषाः मधूलिकाधान्यभेदः कृष्णास्थलजाः कृष्णाव्रीहयः
रोहाःरक्तशालयः अन्यस्त्वाह मधूलिकायावनालजातिविशेषाः
तद्विशेषणंकृष्णाः श्वेतलोहिताः महायवावेणुयवाइति अत्रकृष्ण-
धान्यानिसर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् य-
वाद्विविधा महायवाव्रीहियवाश्च तिलाःकृष्णाःकृष्णानिस्तुषामा-
षाः तथाचकृष्णमाषास्तिलाश्चेति अमेध्याःसतुषामाषानिस्तु-
षापिमसूरिकेतिच अणुःक्षुद्रमस्यं प्रियंगु.कंगु स्तद्बहुवचनंपृथग्ग्रह-
णंचभेदापेक्षं तथाचनिघंटुः पीततण्डुलिकाकंगु प्रियंगुःकुक्कुरी-
मता सितकगुस्तुमुसटो रक्तकङ्गुस्तुमाधिकः चनकः काककंगुःस्या
च्छ्यामाकस्तृणबीजकइति मसूराःसतुषानिस्तुषाश्च नश्राद्धेदेयाः
निस्तुषापिमसूरिकेत्युक्तेः खल्वाःखलकुलाश्चाप्रसिद्धाः कोटयच-
णकौवाच्यौग्राम्यत्वात् दशेतिग्रामसंख्यान किन्तुहविष्यसंख्या
तथाचविष्णुःतिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैःशाकैः श्यामाकैः प्रि-
यंगुनीवारैर्गोधूमैर्मासम्प्रीयन्तइति मसूरादिग्रहणाच्च तथा मा-
संतृप्तिःपितृणान्तु हविष्यान्नेनजायतइति क्षुद्रधान्यानिश्यामाक

प्रियंगुतिलगौरसर्षपवर्जं सर्वाण्यश्राद्धार्हाणि निरस्तत्वात् तथा-च वर्ज्योमर्कटकाःश्राद्धे राजमाषास्तथैवच: निष्पूयिकामसूराश्च श्राद्धकर्मणिगर्हिता: मारद्वाजोपि निरसान्यपिसर्वाणि भक्ष्यभो-ज्यानियानिच तानिसुर्नैवदेयानि सर्वत्रश्राद्धकर्मणीति अथवःचुद्रा-न्नानिकृष्णानि हृदयास्तवरक्ष्योपि मकुष्टोराजमाषाश्च मसूराश्च-णकास्तथा कोद्रवास्तूलकाराजसर्षपा: श्राद्धवातकाइति राजसर्षपो-राजिका: तथाचनिघण्टु: आसुरीराजिकाराजीक्षविकारावसर्षपा: राजिकाभरद्वत्यन्याराजिकाकृष्णसर्षपाइति चतुर्विंशतिमतेपि को-द्रवाराजमाषाश्च कुलुत्थाश्चणकास्तथा निष्पावांस्तुविशेषेणपञ्चै-तान्वर्जयेत्सदा यावनालानपितथा वर्जेद्विविषश्चितइति राज-माषा:पीतगौरवर्णमाषा: लोबिआ गोरवांसइतिमध्यदेशप्रसिद्धा.। निष्पावावेल्ला: शिंबिरहृशाद्विणापथप्रसिद्ध: इतिकश्चित् चर-कावनमुद्गा: यावनालाजोंधलीतिप्रसिद्धा:। तथाचनिघंटु:या-वनालोदेवधान्यंजुर्दलिंजुन्नलोनलइति अत्रनिष्पावनिषेध.कृष्ण-विषय: कृष्णधान्यानिसर्वाणीतिनिषेधात् यवमौद्गसगोधूमौति-लामुद्गा:ससर्षपा: प्रियङ्गव:कोविदारा निष्पावाश्चात्रशोभनाइति मार्कण्डेयेन कृष्णेतरस्यविहितत्वात् शोभन:कृष्णेतर: स्मृत्यन्तरे मुद्गाढकीमाषवर्जंद्विदलानिदद्यादिति द्विदलानिदलितुंयोग्या-निमुद्ग:कृष्ण: हरितमुद्गञ्चश्याम।पश्यामाकेति ब्रह्मपुराणेपि हरि-तस्यविहितत्वात् माषोराजमाष: तद्ग्रहणंकुलुत्थाद्युपलक्षणम्। तथाचमरीचि: कुलुत्थाश्चणका: श्राद्धे नदेयाश्चैवकोद्रवा: कटुका-निचसर्वाणि विरसानितथैवचेति। आढकीतुवरी अरहरीतिप्र-सिद्धा: एतान्वर्जयित्वाद्विदलानिदद्यादित्यर्थ:।नित्यमुद्गत्तौ विष्णु-पुराणे मसूरचारवालीक कुलुत्थगणाशिग्रवइति शणशिम्बादि

तेरानुकैश्चाग्यचोटै: पनसैस्तथा काकोलै:चीरकाकोलैस्तथापिराडालुकै: शुभै: लाजाभिश्चशिलाभिश्च वपुसीर्वोरुचिर्भिटै: । सर्पपैराजशाकाभ्यां इंगुदैराजतन्तुभि: प्रियालामलकैर्मुख्यै: । फलभिश्चातिलम्बकै: वेवांकुरैस्तालकदैश्चुत्रिकाचीरकावचै: मोचै:समोचैर्लकुचैस्तथावैबीजपुवकै: मुंजातकै: पद्मफलै: भव्यभोज्य:सुसंस्कृतै: रागखाण्डवचैश्वैश्च चिजातकसमन्वितै: दत्तैस्तुमासम्प्रीयन्ते विधिवत्पितरोन्टणामिति श्रस्यार्थ: विदारीतस्याः कन्दमितिशेषइत्यन्वय: भुरुराडोजलप्रभव: कन्दविशेषइतिमञ्जरीकार: केन्दुक:कचूराख्यशाक: जलप्रभव: कन्दविशेषइत्यन्य: । विसंमृणालम् शृङ्गाटकम् जलजंत्रिकगटकफलं सिंघारइति प्रसिद्ध: कन्द:सूरणकन्द: कर्कन्धुरवादुवदरीफलम्वदरमन्यवदरफलं पालेवतञ्जम्वीराकारंफलञ्चाम्बीरप्रसिद्धं आरुकं आरुकन्द:। भवीट:पार्वतेयबीज फलम् पनसै: कण्टकिफलै: काटहरइति प्रसिद्धै: काकोलै मंधुराफलै: चीरकाकोलैस्तद्भेदै: पिराडालुकैश्वतुर्भेदै: । तथाचमनु: पिराडालुकमचगन्धं मध्वालुस्याचुरोमशं शङ्खालुगङ्गसद्धाशंकाष्टालुस्त्वल्पकाष्टकमितिलाजाभिर्भ्रष्टधान्यै: तथाचशंख: लाजन्नमधुयुतान्दद्यात्सक्तून्शर्करयासहेति शिलाशैलेधं वपुसंत्रपुसीफलम् उर्वारुम्वादुकर्कटी चिर्भिट: कटुककर्कटी सर्पपोगौरसर्पपशाक: राजशाक:शाकविशेष: कृष्णासर्पपशाकमिति माधवीये तन्न तस्यप्रतिषेधात् इंगुदस्तापसतरु. राजतन्तु: प्रियोलोराजोदनम्। निघण्टोक्ति: प्रियालाद्राक्ष्याधा फलुका कोटुम्बरिकाफलम् अतिलम्बकोन्तालकदे स्तालमूलै: कन्दै: चुम्रिकाचिबिकाफलम्। तिन्तिडीफलमित्यर्थ: । नागरषडातिन्तिडीतिस्त्वन्यत्रवचनात् । तिन्तिरीकाफलाध्यचं मोचाकदलीफलम् लकुचं लकुचफलै: बी

न्दराजः। सुनिषण्णावितुन्नशाकं। सुरतुभीति ख्यातम्जलभवं-
शाकमिति कश्चित्। सुनिषंणं वांगेरीसदृशशाकम्वा। वांगेरीस-
दृशैः पत्रैःसुनिषंणशाकमुच्यते। शाकञ्जलाशयदेशेचतुः पत्रीतिगच्छ-
न्तइति सुश्रुतोक्तेः। सुवर्चला.ब्रह्मसुवर्चला। सूर्यावर्तइति गोवि-
न्दराजः। वधुल.शोकर्णिका। किङ्किणीद्राक्षाक्षुद्रद्राक्षा। लकु-
चोलिकुचः मोचाकदलीफलं कर्कन्धुरुत्तः गौत्रकस्वकपुष्पंयार-
म्प्रियालुर्निशेषः तन्दुकोसितसारः शृंगाटकमुक्तम् मरुपकम्फो-
लरुसइतिप्रसिद्धफलम् दृष्टसौविदिग्धिकालं वरेहटाइतिप्रसिद्धम्
दीर्घमूलमितिखिङकेरीफलम् मूलकमित्यन्यः पटोलोदीर्घपटोलोरा-
जीफलमित्यर्थः चिचेण्डाइतिलोके यत्तु गन्धारिकापटोलानिश्रा-
द्धकर्मणिवर्जयेदितिपटोलनिषेधः सक्षुद्रपटोलविषयः तथाचनिघ-
ण्टः पटोलीयाद्वितीयान्याम्यादुपलफलावसैदिति शिवप्रसिद्धं कु
मारेश्वरसंवादेपि। पालेवतमञ्जरीकाखर्जूराम्लकासिकका बिल्वा-
मलकमाक्षोटपनसाम्रातकामिच। वेचुर्वेत्रांकुराःशालकुचक्को-
च्चमेवच शीतकन्दंविसन्नालिङ्कराकम्बूलकशाखा। इत्यादिमेध्यम-
न्यद्वप्रदेयश्राद्धकर्मणि। वेत्र.शणभेदःइतरस्यानिषेधात्। वेत्रुमं-
टाकशाकमित्यन्यः वर्ज्यशाकान्याहविष्णुःभूस्तृणशिग्रुसर्षपसुर-
सार्कजकूष्माण्डालाबुवार्त्ताकपालक्यत्तण्डुलीयककुसुमान्दिवर्ज-
येदिति भूस्तृणोराहिस.गन्धबथाख्यंशाकमित्यन्य.शिग्रुर्मोहिज-
नाइतिप्रसिद्धं सर्षपोराजसर्षपः इतरस्यविहितत्वात् सुरसाश्वे-
तनिर्गुण्डी अर्कजः श्वेतार्कजः कुहेरइतिप्रसिद्ध.। पालक्यः पल-
कीतिप्रसिद्धः तंदुलीयकञ्चौराइतिप्रसिद्धं वार्त्ताकंश्वेतवृन्ताकं।
उशना। नालिकाशणकच्छ्लाककुसुंभालाबुविड्भवान्। कुम्भीकम्बुक-
वृन्ताककोविदारांश्चवर्जयेत्। वर्जयेद्गृञ्जनंश्राद्धेकाञ्जिकम्पिण्ड-

मसूरं करञ्जं वैपिप्पल्यैवैरसगन्धोत्कटास्तथा । नालिका प्रसिद्धा । शोभाञ्जनाग्रैलापल्लवेति माधवीये कृष्णाकाञ्चिलिगृञ्जः कुम्भीयोपर्यायः कम्बुकं दत्तालाबुवृन्ताकं श्वेतं कोविदारश्चमकरकम् एश्रनोहरि-द्रावर्णः पलाण्डुशिग्रुमः कालिञ्जकमसिद्धम् करञ्जश्चिरिबिल्वफलम् पुराणेपि रंगवृद्धीरं चुरर्नसगंक्रमू मृणालिच चपेटोक्ताधनिर्यासालवणान्यौषराणि व । भरटकोपि खल्यांसुकुष्माण्डफलप्रबलकन्दञ्च पिप्पली । विविकाभिकरीराणि कोविदारगवेधुकाः । कुलत्थशणजम्बीरक-रभावितथैवच । अन्यान्न्यद्रक्तपुष्पं गिचु पारन्मथैवच । एतानि नैवदेयानि सर्वस्मिन् श्राद्धकर्मणीति । पैठीनसिः हन्ताकंनालिका पोतकुसुंभाश्मन्तकाश्चेति श्राद्धनामभक्ष्याइति । स्मृत्यन्तरं पिण्डालुकश्रुगुण्डीरश्च मधुसंगालिकम् । कुष्माण्डं च बहुबीजानि श्राद्धे दत्वा व्रजत्यधः । भविष्येपि लशुनं गृञ्जनश्चैव पलाण्डुकवकानिच हस्ताक्षमाविषालावुजानीया ज्ञातिदूषिताइति । एषामर्थः । वंशकरीरवंशाङ्कुरः सर्षपर्णी सह्याद्रः सर्जकं शालफलम् । पीतसा-रकश्मन्धः चपेटोक्ताः भिन्नभिन्ननिर्यासाः श्रश्मप्रभवादयः । तथा-चमनुः लोहितान्वृक्षनिर्यासाव्रश्चन प्रभवांस्तथेति । लोहिताद्यनिर्यासाश्चाद्यः हिमपाटलश्वेतचन्दनानां हिंगुकर्पूरादीनामनि-षेधः । हिंग्वादीनां विस्मयमग्रे वक्ष्यामः । औषराणि क्षारलवणानि सर्वाणि ग्रन्थसूरात्वदोषा लवणं हुतमितिवचनात् । सैन्धवसामु-द्रादीनां विहितत्वात् । तथाच लवणेसैन्धवसामुद्रे इति अपिच सैन्धवंलवणं यच्च यच्चमानससम्भवं । पवित्रे परमेह्येते प्रत्यक्षे अपि नित्यशः मानससम्भवं सांभरीति प्रसिद्धमिति । हलायुधः करीरं गृढपत्रक्षुद्रीजाश्मृति प्रसिद्धम् कोविदारत्तः कञ्चनारक्रोद्भवः । सुर-णगवेधुका शर्वशशयलाधि । जंबीरोदन्तशठफलम् करम्भाणि

चारयवचारसौवर्च्चल सौवर्च्चकादिलवणानि । पीतम्पौतिका-ख्यंकम् यम्भ्रन्तकोमहोलीष्टचइति प्रसिद्धस्तच्छाकम् । इन्ताकंश्वेतं तथाचदेवल: काण्डूरंश्वेतहन्ताकं कुश्माण्डञ्चविवर्जयेत् । उपमन्यु-रपि नाश्नीयाच्छुतवृंताकं मातुलानीतयाण्डकं चण्डकञ्चवाकं मातुलानिभङ्गेति काण्डूरंकपिकच्छू: । तत्फलङ्कर्जूरफलमित्यर्थः । कुश्माण्डंहन्तालावुसदृशफलम् पिण्डालुपेडरुइतिप्रसिद्धं शुण्ठीरं करमर्द: करवन्दफलानि । वहुवीजानित्रपुवीजपूरकादीनि पलाण्डु:श्वेतकन्द: पलाण्डु विशेष: लशुनन्दीर्घपत्रञ्चपिच्छाग न्धोमहौषधम् । करयरचपलाण्डुश्च लताकाशचपरारिका । गृञ्जनम् पत्तनेष्टश्च पलाण्डोदशजातय इति सुश्रुतोक्तेः । कवलं खिलीम्बुः कुमारसंवादेपि वर्ज्यास्त्विचमसूरास्तुकोद्रवालवणाकृतं । भूस्तृणं सरसं शिग्रुम्पालक्यासुमकं तथा । पिण्डंमूलञ्च वर्णाद्यं लोहितंव्रश्चनानिच । पलाण्डुं विड्वराहच छत्रा कंग्रामकाकुटं लशुनंगृञ्जनं जंबूफलानिकवकानिच तण्डूलीयक मुद्दालराज-माषासुरीरपि । कृष्णाजात्यतसीतैलम्मयश्च जाविका दिकमिति सुमकङ्कादिरीसं कक्कुलभवंशाकंउद्दाल:कोविदार: चासुरीरा जिका । कृष्णाजातीकृष्णजीरक: करोञ्जीतिप्रसिद्धश्च अतसी-तुमा शेषमप्रसिद्धं हारीत: नवटंप्रचौग्दुंगरदधित्थनोल मातुलिङ्ग-

द्रव्येषु हिंगुशाकेषु कालानश्च शुभानिच निषिद्धेत्यर्थः पुलकाङ्गुष्ठान्दस.। कालानलः कृष्णार्जक.कुठेरइतिप्रसिद्धः शुभाशुभाख्यःशाकविशेषः इत्यादिनिषेधः विधिस्तुपिप्पलीमरिचंञ्चैवपटोलं बृहतीफलमितिवायुपुराणे कुमारेश्वरसम्वादे पिप्पलीमरिचंचैवगुपटोलंबृहतीफलमित्यादि आदित्यपुराणेपि मधूकं रामठञ्चैवकर्पूरंमरिचङ्गुडमित्यादि रामठंहिङ्गुः एवंवचनविप्रतिपत्तौकेचिदाहुः पिप्पलीमरिचं हिंगूनांसंस्कारकत्वेनविधिर्युक्तःप्रतिभाति केवलानामतिनिषेधः अपरेतु संस्कारान्तराभावेविधिरन्यथानेत्याहुः।पौडगीपहणाग्रहणवद्विकल्पइत्येके एवञ्चमतिसंस्कारकत्वेन विधिर्युक्तः प्रतिभाति । संस्कारत्वेनस्वादूनिमधुराणिचेतिस्वादुत्वविधित्वोपपत्तेः तथाच शुंठीमरीचम्पिप्पल्योधान्यकाजाजिहिङ्गुकम् पिप्पलीमूलसंयुक्तसंस्कारइतिस्मृतमिति गङ्गः कृष्णाजाजीविडञ्चैव पसीतपाकीतथैवच वर्जयेल्लवणं सर्वंतथाजम्बूफलानिच । कृष्णाजाजीकृष्णजीरकः विडंविदाख्यम् । लवणं सर्वंसैन्धवसामुद्रमाभरिव्यतिरिक्तान् ब्रह्माण्डपुराणे आसनारूढमन्नादीम्पादोपहतमेव चअमेध्यादागतैः । स्पृष्टम्भुक्तम्पर्युषितञ्चयत् द्विःस्विन्नम् परिदग्धस्तथैवाग्रावलेहितम् शर्करा कीटपाषाणैःकेशैर्यञ्चाप्युपद्रुतम् पिण्याकमथितञ्चैवतथातिलवणञ्चयत् सिद्धाःकृताश्चयेभक्ष्याःप्रत्यक्षलवणाकृताः वाग्भावदुष्टांश्चातयादुष्टैश्चोपहतांस्तथा वाससावधुतानियज्ञ्योनिश्राद्धकर्मणीति आसनारूढमासनोपरिकृतं पादोपहतंपदास्पृष्टम् अमेध्यादागतैःचर्मकारादिपपयिश्चस्थानादागतैरशुद्धैःस्पृष्टम् द्विःस्विन्नंद्विः पक्वम् परिदग्धमतिदग्धम् ग्रावलेहितंग्रावात्पूर्वमास्वादितम् पिण्याकंतिलकल्कः मथितम् पापिण्योलितन्निर्जलन्दधि करेणमथितन्दधीतिनिषेधः

तन्तक्रमित्यन्यः। सिद्धासदशाः चामलकादयःपृथक्पृथग्वा मि-
श्रिताः तथा दधिशाकं तथाभक्ष्यं शुक्तक्षीरपधिवर्जितम् सर्वं येन
तथान्यत्तुसर्वानभिपन्नानपि अभक्ष्यन्दधिशाकसुवर्जयेदित्यन्व-
यः। अन्यन्निषिद्धमित्यर्थः अभिपन्नाःसन्धानानिशुक्तमनम्लं वस्तु
कालान्तरेणद्रव्यान्तरेणात्यम्लन्तस्वभावसौरथम्लम् तथाचबृहस्पतिः
भवत्यम्लंशुक्तमाख्यातन्निन्दितंब्रह्मवादिभिरिति अत्रापवादः प-
द्मे नोक्तः दधिभक्ष्याणिशुक्तेषु सर्वञ्चदधिसम्भवम् क्षीरसम्भवभ-
क्ष्यंस्यात्सर्पिर्युक्तमितिस्थितिः अनग्निपक्वमप्यन्नं क्षीरसंस्थितमपक्व-
माषादिघृतयुक्तम्भक्ष्यमित्यर्थः। वायुपुराणेपिभक्ष्याण्येवाह खण्डा-
श्चवृष्टकाघृतपूरिका मृगरोमधुसर्पिश्चपयः पायसमेवच दधिग-
व्यामसंसृष्टभक्ष्यान्नानाविधानपि। शर्कराक्षीरसंयुक्ताःपृथुकानि-
त्यमक्षयाः। सक्तूंल्लाजांस्तथापूपान्कुल्माषान्व्यञ्जनैःसह। सर्पिःस्नि-
ग्धानिसर्वाणिदध्नासंसृज्यभोजयेत् श्राद्धे ह्येतानियोदद्यात्पित-
रःप्रीणयन्तितमिति कर्दमादध्यक्ताःसक्तवः इष्टकाःकासारखण्डा-
नि पृथुकाश्चिपिटाः असंसृष्टभक्ष्याःस्वकीयभक्ष्याः लाजाभृष्टव्री-
हितण्डुलाः अपूपाःमण्डकाःकुल्माषायावकाःएतानिपर्युषिता-
न्यपिघृतस्निग्धानिदध्नामधुनाचसंस्कृतानिभक्षयेदिति पर्युषिता
पक्वादन्नत्यर्थः यत्किञ्चिन्मधुनामिश्रंगोक्षीरघृतपायसैः दत्तमक्षय्य-
मित्याहुःपितरःपूर्वदेवताइतिमत्स्यपुराणवचनादित्यलम्बहुनाग्रिमं
तस्योनुसन्धेयम् अन्नाभावेफलमूलैस्तृप्तिरित्युक्तमेवोपाय-
धमा, ॥

## मू० सद्यान्ने ननरास्तर्पयन्ति ॥ ५ ॥

फलमूलैरन्नेनसहनराः पितॄंस्तर्पयेयुर्नकेवलैरित्यर्थः लब्धोनि-
र्डर्थत्वात् अत्राग्रेगिरिहर्षायर्थंपसवामेलब्धे सदैति ग्रहणं विम्य-

ष्टार्थस्यास्यामाधान्यार्थं अथमस्युक्तेप्रधानइतिपाणीनिस्मरण-
विरोधादस्यस्मकथमप्राधान्यं नेति उच्यते अविवक्षितत्वेनास्यदो-
षपरिदूषितत्वात् तथाच विवक्षस्यहिशब्दस्यप्रधानशङ्कारयाज्ञचा-
मुसतेति नचान्त्रमन्तरेणाह्नतौमूलफलादेःसामर्थ्याभिप्रायः प्रधा
ननगुणसद्भावसम्भवोमतो तस्मात्त्रिसदृष्टार्थमेवसङ्केतुरक्तं। सङ्का-
र्नेनोत्तरास्तर्पयन्तीतिक्वचित्पाठस्तत्रोत्तरामूल फलाद्यस्तेनैवम-
स्ततर्पयन्त्विष्टान्नान्कुर्वन्तिनकेवलानित्यर्थः एवंनहिंसात्सर्वभूतानी-
त्यहिंसाधर्मेणाह्नतिमभिधायेदानीं हिंसाधर्मेणाह।

## मू० छागोस्रमेषानालभ्य॥ ६॥

छागोर्बर्करःउस्रस्तूपरः सचशृङ्गहीनछागादि तथाचश्रुतिः
तूपरोवाथविषाणइति,मेषोमेढ्रः एतान्पिलु इ गेनहत्वापचेदित्य-
र्थ. तथाचात्रिः मधुपर्के चसोमेचदैवेपित्र्ये चकर्मणि अत्रैवपशवोहिं-
स्यान्नान्यत्वेतिकथञ्चन स्कन्दसंवादेपि अर्थेदेवपितॄणांहियोहिन-
स्तिपशूद्विजः सयज्ञफलमाप्नोतितेचयान्तिपराङ्गतिम। जावाली-
पि हिनस्तियःपशून्स्वार्थमुद्दिश्यैवसपापभाक्। श्राद्धापदेशतोहिं-
सन्नपिस्वार्थेनदुष्यतीति अत्रैकआहुः। उस्त्रोवलीवर्दः तथाच म-
होक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदिति तदयुक्तम् महोक्षत्व-
शब्देनतूपरस्योक्तत्वात् तथाचजावालः विषाणोद्भवकालेतुयोवि-
षाणविवर्जितः संमहोक्षंवदन्त्यार्यास्तूपरञ्चापिपावनमितिमहो-
क्षःपक्षीवामहोक्षइतिप्रसिद्धः तथाचजातूकर्ण्यः किञ्चिल्लोहित-
वर्णोहिदीर्घपुच्छोगुरुस्वरः ह्रस्वचोटित्वयःपक्षीसमहोक्षेतिपाठन-
इति किञ्च तूपरस्याभक्षत्वमुक्तम् तथाचेश्वर. साक्षाद्धर्मोऽपि-
प्रोक्षोमन्मूर्त्तिर्ममवाहनः तंयदापिहियोहन्तितेनाहंस्कन्दताडितः

ब्रह्मदेवलोपि वेसरांश्चगजग्रवांश्चैकपभाक्करिमाचलं रासभञ्चाग्रच-भवेदिट्कृमिवांश्चैभवदिति करिमाचल: शृगाल: । उक्त,शतवच्छि-न्नामदस्यनी उक्त शतवलादुस्वरस्वपरोच्चगभरितव्यमिधानात् । तदपिन पश्वालम्भमकरणात् नहन्यान्मत्स्यसूकराविति निषेधात् अतश्चोरुशब्देनकलौछागमेषावेव ,पशुपञ्चकमध्येतयोरेव भक्ष्य-त्वाद्दचनोक्तत्वाच्च तथाचश्रुति: पुरुषोऽश्वोगौरविरजोभक्तेताव-न्तोवैसर्वेपशवइति गोभिलसूत्रञ्च छागोऽस्मेषाश्चालभ्याइति । ननुचछागमेषग्रहणेनैवतत्त्वब्धे: किमर्थमुरुग्रहणं उच्यते विशेष-विध्यर्थत्वादित्यदोष: । तथाच स्कन्दसम्बादे वार्ध्रीनसञ्चशश सकोलाहजगुपरंघृतमिति । इदमादेरम्बवेदत्तं मानन्त्यायतिला-मधु अन्यञ्च अनन्ताखड्गमांसेनलोहच्छागाच्च नूपरादिति । अत्र कश्चिद्दाक्षिणात्य आह । छागोऽस्मेषानिति पुंस्त्वमविवक्षितं उपादीय-मानत्वा त्पशुनायजेतेतिवत् सर्वासांपशुजातीनांमारणंभक्षण-न्तथा । विधानेतुनदोषस्यादन्यथानरकंव्रजेदिति । अन्येत्वाहु: पशुनायजेतेत्यत्रापि पुंस्त्वस्यैवविवक्षितत्वात् पुंव्यक्तिरेवध्यानस्त्री-व्यक्तिरिति । अत्रानुचाना: प्रमाणम् ॥

## मू० क्रीतालब्ध्वावाऽस्वयम्मृतानाहृत्यपचेत् ७

वाशब्द:पशुवन्धाभावे अस्वयंमृतपदग्रहणम् । निषिद्धवर्जनोप-लक्षणं तेनपशुभावेविहित मृगपक्ष्यादिमांसानिक्रय लाभाभ्या-माहृत्यपचेन्न निषिद्धमित्यर्थ:। विनामांसेनयच्छ्राद्धं कृतमप्यकृतंभ-वेदिति । श्राद्धवैकल्यापत्ते: पद्मपुराणे विनामांसेनयच्छ्राद्धन्नतत्र तृप्तिकरम्भवेत् । क्रव्यादा: पितरोयस्मात्तस्मात्तैर्नैव तान्यजेदिति अत्रैकभकारविश्लेषम बुध्वास्वयंमृतानपिपचेदित्याहु:। तदयुक्तं

तेषांनिषिद्धत्वात् तथास्मृतिः उच्छिष्टस्यघृतादानेच्छतमांसस्यभक्षण-
म् अगुल्यादंतकाष्ठस्यतुल्यंगोमांसभक्षणैः तथा शस्त्रशाकस्य त-
थांसक्ष्करेणमथितन्दधिअगुल्यादन्तघर्षेचतुल्यङ्गोमांसभक्षणैरिति
महाभारतेपि विपक्षचहतस्यैवव्याधितिर्यग्घतन्तथा नप्रशसन्ति
वैश्राद्धेयञ्चशस्त्रविवर्जितम् विपक्षश्चारण्येपतितपलादौविषप्रक्षेप-
स्तेनहतं तिर्यग्घतंसंहाति रिक्तहकादिहतं तयोरभ्यनुज्ञानात्।
तथाचसिंहव्याघ्रहतंचयत् इति प्रशस्तमितिशेषः अथवाश्राद्धे त-
स्यापिनिषेधोविधिर्नित्यभोजनविषयः एकमूलकत्वात् शस्त्रविव-
र्जितम्वयंमृतं अनुपाकृतमांसानिसौनंवल्लूरमेवच स्मृतिलोकनि-
षिद्धांश्चमृगमीनाण्डजानपि सौनंहिंसास्थानभवम्। अनुपाकृतंसं
स्कारहीनम् वल्लूरंशुष्कंवर्जयेदिति। पृष्टमांसन्तथामांसंवर्ज्यमा
सञ्चपुवक। नभक्षयन्तिसततम्पृथ्वचलवणानिचेति। मार्कण्डेयः।
पृष्टमांसम्पैरइतिप्रसिद्धं तथाचवामनपुराणे पृष्टमांसाशिनोमूढा
स्थैवक्रौञ्चजीवलः स्त्रियन्तेहपभक्ष्येतेनरकेरजनीचरोपि ग्रेषम-
न्यतोज्ञेयम् ननुवाफलमूलैरौषधीभिर्वत्र्यहिंसाधर्मयत्तदि मृत्वा-
नन्तरंछागोस्तमेपानालभ्येति हिंसाविधायेदानीं क्रयलाभोमूत्र-
यतावाशब्देनहिंसानिषिद्धेति। तथाच कन्दमूलफलाभावेमांसा
न्याहुर्मनीषिणः पुण्यानिमुनिगीतानिलब्धानिच वधम्बिनेति। च-
तुर्विंशतिमते महाभारतेपि क्रीत्वास्वयम्वाप्युत्पाद्यपरोपहृतमेववा।
देवान्पितृनच्चर्चयित्वाखादन्मांसन्नदुष्यति एषउक्तोविधिर्ब्राह्मः।
सर्वकामफलप्रदइति तस्माद्वाशब्देन हिंसान्निषिध्यक्रयलाभावेव
सूत्रकाराभिमताविति। अत्रोच्यते यदुक्तं। हिंसानन्तरक्रयला-
भौसूत्रयताहिंसानिषिद्धेति। तन्न पशुबन्धासम्भवेक्रयलाभयोरनु
क्तत्वात् तथाचस्कन्दसम्वादे। मांसाभावेकृतेश्राद्धे ध्यायन्तेपिह-

देवताः करिष्यतिसुतोबभ्याश्र इ' पशान्सामिषं । इष्टाशिक्ष्वामांसन्नतंशपन्तिहयामुहुरिति मांसाभावेपश्वसंभवे । यत्वभिहितं कन्दमूलफलाभावइत्यनेन हिंसानिषिद्धेति तदप्ययुक्तं । कंदमूलफलाद्यभावेयधर्वविमेत्यहिंसाधर्मेण प्रतिपादकत्वान्नहिंसानिषिद्धेति । यच्चाभ्यधायिक्रीत्वाम्वयंवाप्युत्पाद्येत्यादिनान्नाशविधिरिति तदपिमन्दमिति तस्याप्यमांसभुग्दाक्षिणात्यपरत्वेनतद्देशविषयत्वात् दृश्यतेच देशविषयात्वाचारः तथाच वृहस्पतिः । उदुद्मतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः । मध्यदेशेचर्मकाराः शिल्पिनः खगवासिनमत्स्यादाश्चनराः सर्वेगम्यान्द्वारजक्ष्वलाः । पर्वतेमद्यपानार्यैनैतद्दण्डस्यचार्हकाइत्यादि पठन्तिच पृथिव्यास्त्रिषुभागेषुमांसभक्षणं माचरेत् यत्तु वृहन्नचेतोवचनम् । तद्देशानांनविप्राणांनयुगानांद्विजोत्तमाः । धर्मं शास्त्रे पुर्वेभिदोहृष्यमांसभक्षणइति । तद्दक्षिणव्यतिरिक्तदेशविषमित्यविरोधः किञ्चयद्येवमाम्नामर्मविष्यतद्मनीयोमीषम्पशुमालभते छागोसमेषानालभ्येत्यादिविहितहिंसाप्रतिपादकानिवाक्यान्यनर्थकान्यभविष्यन्निति तस्मात्पशुवधासंभवेक्रीत्वाखव्वावेति सूक्तमितिसिद्धं । इदानीं स्वर्गोरभक्षिरिच्छागपर्यन्तेफलविशेषम् । मांसंविशाणशशयोकरोत्युक्रमतः सुराम् धिनोतिचपितृं श्चेवमांसान्पायसमेवचेत्यादिवचनविहितांतृप्तिमुपक्रमते ॥

## मू॰ मासद्वयन्तुमत्स्यैः ॥ ८ ॥

मत्स्याःपाठीनोदयोविहिता ननिषिद्ध . तैर्द्विमासंतृप्तिरित्यर्थः । तथाचमनु. । द्वौमासौमत्स्यमांसेनेति तुशब्दोविशेषणार्थः तेनमत्स्यविशेषेकालविशेषइत्यर्थः तथाचापस्तंबः शतवलमत्स्यस्यमांसेना-

षण्मासातृप्तिरिति यत्तुमत्स्यैश्चतुरोमासानितिपैठीनस्त्रिवचनन्तच्छ्रा-
शल्कविषयम्। तथाचयमः। शशल्काश्चतुरोमासानिति। प्रीणा-
यन्तीतिशेषः। ननुचमत्स्यांश्चकामतोऽभ्यासेपवासत्र्यहंवसे
दिति प्रायश्चित्तस्योक्तत्वात् कथमेवमिति उच्यते तस्यनित्यभोज-
नविषयत्वाद्देवपितृनिवेदनविषयत्वाच्च तथाचागस्त्यः। च्छतेयो-
ऽव्यकव्याभ्यांमत्स्यमांसंप्रमश्नुते लभतेपातकमसौसर्वमांसाशिनां-
वधाम्। कात्यायनोऽपि। कालशाकञ्चमत्स्यांश्चपरमान्नंलितोदनं।
अनिवेद्यनभुञ्जीतपितृणांदैवतैः सहेति एवंतच्चैकतः सर्वमांसा-
निमत्स्यमांसानिचैकतः एकतः सर्वपापानिब्रह्महत्यातथैकतः।
तथा मत्स्यादः सर्वमांसादः इत्यादिवचनद्वन्द्वन्निरर्थकमिति मैवं-
वोचः कार्तिकादिकालविशेषविषयत्वेनसामर्थ्यकत्वाद्दक्षिणादि-
देशेनिषेधकत्वाच्च। तथाचनारदीये नमात्स्यम्भक्षयेन्मांसंनकौर्म-
न्नान्यदेवहीतिकार्तिकादिवैष्णवकालइतिशेषः। मात्स्यादाश्चनराः
सर्वइति मध्यदेशेबृहस्पतिनोक्तं। किञ्चएकतइत्यर्थान्तरम्। स-
र्वमांसानिभक्ष्याणिमांसानिएकतस्तथा भक्ष्यमत्स्यमांसानिचैकत्र तथा
पापानिसर्वाण्यस्मात् एकत्रहत्याब्रह्मज्ञानंचैकत्रेति पापायज्ञादिक-
कर्मेति शब्दरत्नावली हत्यास्याद्गमनेज्ञानइति चन्द्रगोमी एकत्रश
भादिसर्वमांसान्येकत्रमत्स्याएकत्रसर्वेयज्ञा एकत्रब्रह्मज्ञानमेकतस्तु-
लायांसमानमित्यर्थः। तथाचप्रचेताः यान्विदर्भैः पितृणांस्वादजला-
र्धीनसादिभिः साभवेन्मत्स्यमांसेनदत्तेनश्राद्धकर्मणीति तस्माच्छ्रा-
द्धेमत्स्यैः पितॄन्सन्तर्प्यस्वयमपिभुञ्जीतेतिनिरवद्यम्। तथाचब्रह्म-
पुराणम् हव्यकव्यार्थतो विप्राम्भोजयित्वाविधानतः वैसारिणां-
स्तुभुञ्जानोनलिप्येतेनसाद्विजइति। मत्स्यानाहयाज्ञवल्क्यः राजी-
वान्राजशुण्डांश्चसशल्कांश्चैवसर्वशः यद्वाऽपि राजीवान्सिंहतु

षडांश्च सशल्कांश्चविशेषतः । पाठीनरोहितौ भक्ष्यातिमत्स्येष्वतिधा वनादिति । राजीवाःपद्मवर्णाः सिंहतुण्डाःसिंहमुखाः सशल्काःश-ल्याकारावयवयुक्ताः जातुकर्ण्योपि शशश्च मत्स्येष्वपिहि सिंहतुण्ड-श्च रोहिताः । क्षुद्रम त्स्येषु शकुलीतिसेध्यो रोहितवन्स्मृतइति निषि-द्धमत्स्यानाङ्कसएव । गोमत्स्योगुच्छमत्स्यश्च चर्मकाराह्वयस्तथा नैतेद्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः । शृङ्गीन्तकेचिदि-च्छन्तिप्रशस्तोन्हव्यकव्ययोः अयंविकल्पोनित्यभोजने व्यवस्थितः । प्राचुणकादौ तथा मत्स्यश्चिलिचिमो नाम स्मश्रुोऽक्षिद्विजन्मनां श्चिलिचिमः सितगौरोनरवाङ्गसदृश. समुद्रजइत्यायुर्वेदः । ना-न्द्यावर्तातिमत्स्यइत्तिषइवांग विकण्टकगाहिप्रभृतयः क्षुद्रमत्स्य-प्रचस्चत्यतोरेतावद्देवावगन्तव्याः ॥

## सू० मासन्त्रयन्तुहारिणेन ॥ ८ ॥

हरिणस्तामसृगस्तन्मांसेन त्रिमासन्तृप्तिरित्यर्थः । एषः कृ-ष्णमृगः प्रोक्तस्ताभ्नोहरिणउच्यतेइति सुश्रुतत्वात् । आर्णसारे-णाभिकृत्ये तयोर्चोशनाः चतुरोमासान्कृष्णसारेणेति । यत्त्वष्टा-वैणेयेणेतिपैठीनसिनोक्तम् अष्टावैणेयमांसेनेतिच मनुनातत्पर कृष्णसारविषयंभवतुमर्हति । तूपरस्थविशिष्टोक्तेः अन्यथोशनसा-विरोधात् । तथाचोक्तम् स्मृतिद्वैधेतुविषयः कल्पनीयः पृथक्पृथ-गिति । तुशब्दोविशेषार्थः तेनमृगविशेषेकालविशेषइत्यर्थः । तथा-चमार्कण्डेयः करोतितर्पिन्नवैवरो मांसंनसंशयः । सव.शम्बरः शरटिगलितशृङ्गइत्यायुर्वेदः । मनुरपि रौरवेणनवैवतु वन्तु नवः प्रीणातिपञ्चवेइति यनोर्वायवपञ्चरौरवेणेति । गोभिलसूत्रम् तदङ्गशासं शृङ्गवविपय यत्पुनर्देवलेनोक्तम् । त्रीन्मासान्कृभि

मृगैरितितद्विरयसहसरुक्तविषयम्। नचयथाश्रुतविपर्यासेनिकल्पः शक्यतेवक्तुं गृहाणामनेकान्त्यात्तद्विषयानुपलब्धेः। तस्मान्नोपदि-पयोविकल्पोभवतुमर्हति। मार्कण्डेयः पुष्णातिचतुरोमासाञ्छश-स्य पिशितंपितृनिति यस्तुदेवलेनोक्तम् शशैःपञ्चमासान्प्रीतृप्तिरिति मत्स्यैःप्रीणातिपञ्चमासानितिचयस्तेनतद्वृत्तच्छयविषयमिति अवि-रोधः अन्यथाविरोधाद्धर्मस्याधापत्तेः। तथाचव्यासः धर्मयोबाधतेध-र्मोनसधर्मः कदाचन। अविरोधात्तुयोधर्मः सधर्मः उच्यते। तस्माद्विरोधेधर्मस्यनिश्चित्यगुरुलाघवं। ततोभूयस्तरं शिष्टाः कुर्यु धर्मविनिर्णयं तत्त्वविप्रतिपन्नानां वाक्यानामितरेतरं। विरोधप-रिहारेविनिर्णय सत्वदर्शिनइति। नचश्वापदजातेरनेकत्वादेवं नघटतइतिवाच्यम्। तथावामनः कदलीकन्दलीचीनश्वमृगप्रि-यकावपि समुदस्तेतिहरिणाश्चमी अजातयोनयः। कृष्णासारस्य न्यंकुरं कुरुरुरोहिताः गोकर्णपृषतैणस्य रोहिताश्वमरीमृगाः गन्धर्वाःशरभारामं गयोगवयः शशाद्यादयो मृगेन्द्राद्याइति। एवमन्यत्रापि॥

## सू० चतुरऽऔरभ्रेण॥ १०॥

पितृणान्तृप्तिरित्यर्थः। तथाचमनुः औरभ्रेणाथचतुरइति उरभ्रआरण्यमेषः नत्वमेषमांसेनेति ग्राम्यस्यवक्ष्यमाणत्वात्। अन्येत्वाज्ञमेषएवेति। तदयुक्तम् स्मृतिविहितत्वान्मौनत्क्रयदोषाच्च तथाचस्मृतिः। वतत्वाथारण्यमेषइति यत्तु मेषेणपञ्चमासानिति पैठीनसिनोक्तम्। तदारण्यरूपविषयं अत्रेतवाच्यन्दिग्धते किंगवद-मांसंभक्ष्यमभक्ष्यञ्चेति तत्रकेआहुः विहितत्वाद्भक्ष्यमिति तथा-यमः। गावयंत्वद्रसम्मितात् एकादशमासांस्तृप्यन्तीतिशेषः मार्क-

गडेयोपि गवयस्यनुमांसेनतृप्तिःस्याद्दश मासिकीति तदयुक्तम् स्मृतिविरुद्धत्वात् तथाचस्मृतिः । सयंपुरुषमालभन्तस किंपुरुषोभव द्यावश्वंगाश्चतौगौरश्चा गवयश्चाभवनांयम विमालभन्तसउष्ट्रो-भवद्यमजमालभन्त सशरभो भवत्तस्मादेतेषां पशूनं नाशितव्यम-पक्रान्तमेधाह्येतेपशवइति । श्रुतिस्मृतिविरोधेतु श्रुतिरेवबलीयसी-तिश्रुतेर्बलवत्वाच्च । नचश्रुतिविरुद्धस्मृतिरादरणीया तथाचचतु-र्विंशतिमतं स्मृतिर्वेदविरोधेन परित्याज्यायथाभवेत् । तथैवलौ-किकंवाक्यं स्मृतिबाधापरित्यजेदिति श्राद्धविषयत्वेन गवयस्यवि-धिरित्यन्ये । अत्रानूचानाःप्रमाणम् ॥

## सू० पञ्चशाकुनेन ॥ ११ ॥

शाकुनिर्भक्ष्यपक्षीतन्मांसेनेत्यर्थः । तथाचमनुः शकुनेनाथप-ञ्चेवइति । यत्तु शाकुनैश्चतुरोमासानिति देवलेनोक्तम् यच्चचतुरः शाकुनेनेतिचगोभिलेन तद्विहितप्रतिषिद्धहारीतादि पक्षिविषयं यच्चशकुनेनसप्तेति पैठीनसिनोक्तम् तदतिपवित्रकपिञ्जलादि पक्षिविषयं सोमपानोद्भवत्वेन पवित्र्यात् । तथाचश्रुतिः सयत्सो-मपानमासततः कपिंजलःसमभवदिति । जरत्कारुरपि गौरःक-पिंजलोमेध्यः कृकपालावर्हिणइति । वर्हीनीलकण्ठः सुमेधाः किञ्चिल्लोहितवर्णेति दीर्घपुच्छोगुरुतरः । कृकवाकोटिस्तुयःपक्षीस-मश्चोचेतिपावनइति कोटिश्चंचुः भक्ष्यानाह शङ्खः तित्तिरञ्च-मयूरञ्चलावकञ्चकपिंजलम् वार्ध्रीनसंवर्त्तकंचभक्ष्यानाहयमः सदा यदेतिश्राद्धादेरन्यत्रापि जाबालः भक्ष्याःकपिंजलोनीलरत्ता-टीवन्यपदायुधाः भक्ष्याविति नीलःसम्यातित्तिरिः कपिंजलोगौ-रः वन्यपदायुधोवन्यकुक्कुटः वनेजलेभवो जलकुक्कुटइत्यन्ये तत्र

कलविङ्कं प्लवं हंसमिति मनुना प्लवशब्देन तस्य निषिद्धत्वात् च-
क्राङ्कं प्लवद्धोकमिति शङ्खनिषेधाच्च भारद्वाजः मांसेनेति कात्या-
यनोक्तेर्भरद्वाजो भक्ष्यः यत्तु नखादिस्तु भरद्वाजमिति सुमन्तुनोक्तम् त-
त्र भरद्वाजोन्यश्चञ्चुविषयः कौजिडिथादृति प्रसिद्धः तथाच निघण्टुः
वटीवटकङ्गुन्तो भरद्वाजोन्यचञ्चुः वटञ्चोग्यो द्वितीयस्तु खंजरी-
चित्रपुच्छकः इति सुमन्तुः भक्ष्यास्तु नीलकण्ठ.स्याद्धरीतो लावति-
त्तिरी हारीतो विहितप्रतिषिद्धः । कुर्कुटहारीतभक्षणे द्वादश-
रात्रमनाशः इति शङ्खप्रतिषेधात् अन्यस्मृतिद्वयोक्तेयम् वर्ज्याना-
हमनुः क्रव्यादः शकुनीन्सर्वांस्तथा ग्रामनिवासिनः अनिर्दिष्टांश्चै-
कशफांटिट्टिभञ्च विवर्जयेत् । कलविङ्कं प्लवं हंसं चक्राह्वं ग्राम-
कुक्कुटम् सारसं रज्जुदालञ्च दात्यूहं शुकसारिका । प्रतुदाञ्जा-
लपादांश्च कोयष्टिनखविष्किरान् निमज्जतश्च मत्स्यादान्सौनं व-
ल्लूरमेव च । बकंचैव बलाकांश्च काकोलङ्खञ्जरीटकम् । मत्स्या
दान्विड्वराहांश्च मत्स्यान्नैव च सर्वश इति । क्रव्यादो गृध्रादयः ग्रामवा-
सिनः पारावतादयः अनिर्दिष्टभक्ष्यत्वेनाज्ञातः एकशफाश्व-
श्वादयः टिट्टिभो निष्ठुरशब्दभाषी टिटिट्टिटीति प्रसिद्धः , कलविङ्को-
गृहचटकः प्लवो जलकुक्कुटः चक्राह्वः चक्रवाकः रज्जुदालो वृक्षकु-
ट्टः दात्यूहः कालकण्ठः प्रतुदः श्येनः जालपादा जालाकारपादाः
कोयष्टिः शिखरी नखविष्किराश्चकोरादयः निमज्जन्मत्स्यादान्नि
मज्ज्य मत्स्यादा काकोलो गिरिकाकः मत्स्यादाः निमज्जन्तोपि प-
न्येप्रसिद्धः देवलः उलूककुररश्येनगृध्रकुक्कुटवायसाः चकोरः को-
किलो रज्जुदालकश्चक्षमभक्ष्यौ पारावतकपोतौ च न भक्ष्याः पक्षिणो
स्मृताः । जरत्कारुः कारापिका कपोतञ्च सोतकं रक्ततुण्डकम् स-
कृप्रजं सारिकाञ्च कलविङ्कञ्च वर्जयेत् कारापिका शकुनगास्को-

ता: स्रोतकश्चातक: रक्ततुण्ड.शुक: नक्तप्रज:काक: लोमश:ग्रा
मकुकुट:। आतापीमांसानपिवर्जयेत् आतापीचिल्ल:वेदनिधि:
काकारिपिङ्गलाक्रौञ्च: वकोटोटिट्टिभारसौ चाषभासौ भृङ्गराजश्चा
न्द्रं कृच्छ्रद्वयात्तरेत् काकारिरुलूक: पिङ्गलामुखुसरइतिप्रसिद्ध:
वकोटोवक: चाषोनीलपक्षी स्वर्णपक्षीतिप्रसिद्ध: जग्ध्वाप्राश्य-
चान्द्रञ्चान्द्रायणमित्यर्थ:। शङ्ख.हंसश्चहुञ्च कङ्काकङ्कोलङ्क-
ञ्चरीटकाम् मत्स्यादांश्चतथामत्स्यान्वलाकांशुकसारिके। चक्रवा-
कप्लवक्रौञ्चकण्डकाम्भुजगङ्कपिम् मासमेकंव्रतङ्कुर्यादेतांश्चैवनभो-
जयेत् मद्गुर्जलवायस: व्रतञ्चान्द्रायणम् मत्स्यञ्चस्याप्रागुक्ता
निषिद्धमत्स्याश्चत्यर्थ.। धौम्य: पारावतंरथांगञ्चमरालञ्चकु-
लिङ्गकम् जग्ध्वाह्निकक्कुरंग्राम्यंव्रतेनापिनशुध्यति रथांगश्चक्र-
वाक: मरालोहंस. कुलिङ्गकोव्रतेनचान्द्रायणेनेत्यर्थ.अन्यत्स्मृति-
भ्योज्ञेयम।

## मू० षट्छागेन ॥ ११ ॥

पितृणांतृप्तिरित्यर्थ: तथाचमनु:। षण्मासञ्छागमांसेनेतिछा-
गोमहोक्ष: वार्ध्रीनसादन्य: तद्विधेर्विशिष्टत्वात्। यत्तु। छागलं-
सप्तमैमासानिति मार्कण्डेये नोक्तम् तदारण्यछागविषयम् तथा
चश्रुति:। सोमायकुलुङ्गआरण्योजइति। यच्चनचप्राष्यंतच्छजेनत्वि-
तिदेवलेनोक्तम् तद्वार्ध्रीनसव्यतिरिक्तपशुविषयं यत्पुनर्द्वादशमा-
सांछागेनेति पैठीनसिनोक्तम् तत्तूपराजविषयम् तस्यातिपावन-
त्वात् तथाचसमहोक्षेतिपावनइतिप्रागुक्तमित्यविरोध:।

## मू० सप्तकौर्मेण ॥ १२ ॥

कूर्म:कच्छप.तन्मांसेनेत्यर्थ: तथाचदेवल. कूर्म.सप्तमासिकी

तियमोपि कूर्मःप्रोणातिसासारिवति यत्तु शमकूर्मं योमांसेनमासैरे-
कादशभिरित्याति मनुनोक्तम् तद्दृष्टकूर्मविषयमारण्यविषयमेवेत्य-
विरोधः यत्तु नखादेत्कूर्मसूकरादिर्वितिनिषेधस्तद्विषयमग्रेवक्ष्यामः।

## सू॰ अष्टौवराहेण ॥ १३ ॥

वाराहआरण्यसूकरस्तन्मांसेनेत्यर्थः तथाचदेवलः अष्टौमा-
सान्वराहेणेति यत्तु दशमासांस्तुतर्पयन्तिवाराहमहिषामिषैरि-
तिमनुनोक्तम्। तन्मांसलवराहविषयं तस्याद्भुतस्यूतत्वेनौचि-
त्यात् ।तथाचश्रुतिः अग्नीहवैदेवाघृतकुम्भम्प्रवेशयांचक्रुस्ततोवरा-
हाःसम्बभूवुस्तस्माद्वराह मेदुरोघृताद्धिसम्भूतइति यत्तु वत्समासा-
च्छूकरामिषमितिमार्कण्डेयेनोक्तम् तदमांसलविषयमविदुमर्ह-
ति च यथाविरोधात् अर्थवशाङ्कुः। नखादेत्कूर्मसूकरादिर्वितिनि-
षेधाद्वराहकूर्ममांसन्नभक्ष्यमिति। तन्न। तस्यकार्त्तिकादिवैशा-
खकालविषयत्वाच्छुक्लवराहविषयत्वाद्वा तथाचनारदीये। का-
र्त्तिकेसूकरंमासयस्तुभुङ्क्तेविदुर्मतिः तद्भुक्तेजायतेपापीविष्टा
शीग्रामसूकरः नमात्स्यंभक्षयेन्मासन्नकौर्मंनान्यदेवहिद्वातितङ्-
क्तौरौरवान्भुक्त्वा नेत्यनुवृत्तौ हारीतः माराव्रतपाण्डुसूकरसारि-
केतिउपमन्युरपि ग्राम्यश्वेतवराहौतुनभक्ष्यौद्विजपुङ्गवैरिति।

## सू॰ नवमेषमांसेन ॥ १४ ॥

मेषोग्राम्यमेषः तन्मांसेनेत्यर्थ। तथाचयमः मेषैः प्रीणातिवैन-
वेति यत्तु छागस्यैकादशविकैरितिदेवलेनोक्तम्। यच्च तथैकादश-
मासंवाध्रस्यम्पितृतृप्तिमितिच मार्कण्डेयेनतत् परविषयम् अत्र-
विकारप्रत्ययेनकृतेतत्परिहारेणपुनर्मांसग्रहणम् मासविकारार्-
थ्यर्थं तेनतद्विकाराश्मविकालान्मरसाधितादेराहत्यर्थः। तथा-

तेनेति । तत्र तदन्वयम् पृषतशब्देनकिञ्चित्गुणोवाच्यः किंवाचित्र
मृगजातिरिति तत्रयदिचित्रगुणोवाच्यःस्यात्तर्हिरुरुच्छागादीनामपि
पृषतः गुणेएकादशमासतृप्तिहेतुः स्यात् । ततश्चविहिताः सर्वेपि
पृषताः समाः एकादशमास तृप्तिहेतवइत्यर्थः स्यात् । अथपृषत-
शब्दे नचित्रमृगजातिर्वाच्यं स्यात्तर्हितज्जातेरेव वशात्कथञ्चिदपृ-
षतत्वे एकादशमासतृप्तिहेतुत्त्वं नस्यात् प्रत्यु तविहितजातेः परि
त्यागश्चेत्यर्थःस्यात् ।तस्मात्पृषतशब्दस्यकथङ्गतिरित्याक्षेपः इत्युच्य
तेव्याख्यानतोविशेषः प्रतिपत्तिरितिन्यायेनव्याख्यातचित्रमृगसंज्ञै
वैतत्शास्त्रं कत्वाच्चित्रमृगस्यैव ,तावन्मासतृप्तिहेतुनान्यस्येति
एवंसतिमृगशब्दस्या न्वेषणाच्छागादिवाचकत्वा भावात्पृषतत्वे
सत्यपितस्यान्वयोयुक्तः तस्माच्चित्रमृगेणैवतावन्मासतृप्तिरिति
सिद्धम् । ततश्चपञ्चतृप्यन्तिपार्षतैः पार्षतेनेहसप्तवैनवमासान्पार्ष
तेनएकादशपार्षतेनेति देवलमनुपैठीनसि कात्यायनवचनानां
विषयानुपलब्धेर्विकल्पाएव शक्यन्तेवक्तुंनविषयाः । अथवासर्वमृ
गजातिषुपृषतत्वं विशेषस्तेनैकादशेतिसर्वेभ्य स्तृप्तिराधिक्यमित्यर्थः
तत्रचैवंविषयः । पञ्चतृप्यन्तिपार्षतैरिति देवलवचन हरिणमात्रस्य
चित्ररुरुविषयं पार्षतेनेहसप्तवाइति मनुनोक्तंचकृष्णस्य पृषच्चित्र
रुरुविषयं । नवमासान्पार्षतेनेति पैठीनसिनोक्तं वरचित्ररुरुविषयं
एकादशपार्षतेनेति चित्ररूपरविषयमित्यविरोधः अयमाशयः ।पञ्च-
मासानरुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरोःपृषतत्वेन पञ्च-
तृप्यन्तिपार्षतैरिति तृप्तिविशेषः रुरुःप्रीणातिपञ्चकैरिति पञ्च-
मासतृप्तिविषयस्यतु रुरोःपृषतत्वेन एकादशपार्षतेनेहसप्तवैइति
तृप्तिविशेषः । रौरवेणनवैवास्त्विति नवमासतृप्तिविषयत्वेन एका-
दशपार्षतेनेतितृप्तिविशेषः । सर्वपृषतानामनूपरत्वेसति मनन्ता-

तृप्तिरिति । अनन्ताखड्गमासेन लोहच्छागाच्चतृप्तरादिति वच
चनादेवविषयविभागा हरिणमेषशशाहमहिषशशानाम् इयत्ता-
संभवात् एवङ्कल्पनागौरवमप्ययिकद । प्रमाणकल्पनेदोषाभावात्
तथाचाङ्गिराः । प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः । सीद-
न्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः भट्टोपि । प्रमाणैश्चिक-
ल्प्यानि सामान्यानिवहून्यपि अदृष्टशतभागोपि

तथाचविष्णु संवत्सरन्तुपयसा तद्विकारेणवेति। अपिचमार्कण्डेय संवत्सरन्तथागव्यम् पय:पायसमेववेति। आदित्यपुराणे त्रिविध-पायसन्दद्यादिति तथामांसविकाराश्च दधिक्षीरगुडस्वेतिवचनात् पयोविकारा कूर्चिकाक्षीरवटकादय ॥

मू॰ वार्ध्रीनसमांसेनद्वादशवर्षाणि॥ १८॥

तृप्तिरितिशेष वार्ध्रीनसस्त्रिविध तथाचविष्णुधर्मोत्तरे। त्रिपिबन्त्विन्द्रियक्षीणम् यूथस्याग्रचरन्तथा। रक्तवर्णन्तुराजेन्द्र छागम्वार्ध्रीनसंविदुरिति मुखकर्णौजलपानेपतन्तौ जलन्त्रिपिब इत्यर्थ। त्रिपिबन्त्विन्द्रियक्षीणम् श्वेतंवृद्धमजापतिम्। वार्ध्रीन सन्तुतप्राहु याज्ञिका पितृकर्मणीत्यन्यत्र निगमोपि। कृष्णग्रीवो रक्तशिरा, श्वेतपक्षोविहङ्गम सवैवार्ध्रीनस प्रोक्त इत्येषानैगमीश्रु-तिरिति। अत्रानूचाना प्रमाणं रक्तवर्णोवार्ध्रीनसो ऽक्षयतृप्ति विषयोवेत्यविरोध वार्ध्रीनसमहाशल्को लोहानन्तपरोल्टत। आ-नन्त्यायभवेदत्तइति वचनात्। लोहामिषङ्कालशाक मांसवार्ध्री-नसस्यवेति याज्ञवल्क्यवचनाच्च। वार्ध्रीनसशब्देणखोच्चारणमना लोचित। उष्ट्रोघृणीवान्वार्ध्रीनसस्तेमत्या अरण्यायसृमरोरुरुरौद्र इतिश्रुतेस्तवर्गीयपाठात। श्राद्धेशिष्टस्यामांसस्यावश्य भक्षणमप्य वगन्तव्यम्।तथाचविश्वामित्र धर्मशास्त्रान्तुविज्ञाय भक्ष्यश्चामिषम्प्र मेववा प्रदायपितृदेवेभ्यो भुञ्जीतातिथिपूर्वकमिति। अत्रमांसं भोजनेभुञ्जीतेतिनियमार्थ। तथाचोपमन्यु छगलादिपशूनांमांसं मांसशाकादिमेध्यवदिति। पवित्रताभिधानादिति॥

इति श्रीश्राद्धकाशिकायां मूलवृत्तौ तृप्तिकरद्रव्यसामान्यं प्रमाणमिति॥

सप्तमीकण्डिकासमाप्ता॥

इत्थं ग्राम्यारण्यौषधिमूलफलैरनेकमत्स्यमांसैश्च तृप्तिमभिधाया-ऽधुनाचय्यतृप्तिंविवक्षु.सूत्रमारभते ।

## मू० अथाक्षय्यतृप्तिः ॥ १ ॥

अथशब्द.प्रश्ने कार्त्स्न्ये वा अक्षय्यातृप्ति.कथञ्चिं वाक्षय्यतृप्ति-कारन्द्रव्यमिति प्रश्नमित्यर्थं. कार्त्स्न्येनाक्षय्यतृप्तिरुच्यतइतिवार्थं. । अक्षय्योनन्तता तथाचमनु. कालशाकम्महाशल्क खड्गोलोहा-मिषंमधु । आनन्त्यायैवकल्प्यन्ते मुन्यन्नानिचसर्वशइति । अस्योत्त-रमाह ।

## मू० खड्गमांसंकालशाकंलोहच्छाग-मांसं ॥ २ ॥

खड्गस्तु र.खड्गमृगस्तन्मांसंनिषिद्धएणादिव्यतिरिक्तम् । तथाचविष्णु कालशाकमहाशल्कोमांसंवार्ध्रीनसस्यच विषाण-वर्ज्यंखड्गानासूयतांस्तुभचाहइति यत्तुखड्गमांसेनत्रयोदशमा-सानितिपैठीनसिनोक्तन्तत्सशृंगविषयम् लोह:सर्वलोहितछाग तथाचपैठीनसि: सर्वलोहच्छागेनानन्त्यमिति लोहितशब्दोतावैवव-दन्ति. एवमादिद्रव्यमक्षय्यतृप्तिकारमिति पूर्वप्रश्नस्योत्तरमित्यर्थः । खड्गलोहितयोर्मध्येकालशाकोक्तिस्तत्तुल्यफलार्थं. ।

## मू० मधुमहाशल्कः ॥ ३ ॥

मधुमाक्षिक महाशल्कोमत्स्यभेदः महसेनइतिमध्यदेशेप्रसिद्ध. महाशल्कामहाकालिनोमत्स्याइतियमस्मृति.इहन्निवचइतिय स्यरूढिरितिहलायुध.टेकार्यादौप्रसिद्धइतिकल्पतरु.कंत्रलाख्यइ-तिकश्चित् शल्कोवैत्यन्ये एवमनेकविप्रतिपत्तौएकस्यैोक्त एवाद-

र्त्तव्यः एकशतकोश्चन्द्रशललाटेखड्गसंयुतःशुक्लवर्णस्तुमतृष्योऽहिमहागलकःसउच्यते इति अत्र केचाहुः। कलौश्राद्धे मधुनिषिद्धमिति। तथाचश्राद्धे मांसन्तथामध्विति लिखितमाक्। तन्नविचारसहम् निवन्धकृद्भिर्निर्मूलप्रतिपादनादित्युक्तम्। कलौविधायकवचनोपलब्धेश्च तथाचपैठीनसिः परमान्नं कालशाकम्मधुमांसं-घृतम्पयः मुन्यन्नानितिलाविमाःप्रकृत्याहविरष्टधा। शस्तान्यष्टौतुसर्वेषुयुगेषुमुनिसत्तमाः पितॄणांदेवतानाञ्चदुर्लभानिकलौयुग-इति। परमान्नम्पायसम्। देवलोपि दर्भाम्तिलागजच्छायादौहित्रं मधुसर्पिषी कुतपोनीलकण्ठ श्चपविवाणीहपैतृकै इहकलौ तथा तुलसीमधुदर्भाश्चतिलाःसर्पिकं गामिषं एतन्मेध्यतमन्नित्यंसदाचाराश्चयेद्विजाइति सुमेधाअपि विमांसंविमधुश्राद्धम्विष्टतमौति भोजनम् विनासमतरङ्गामीव्योमालिङ्गनवच्चयमिति ॥

## मू॰ वर्षासुमघाश्राद्धम् ॥ ४ ॥

वर्षातोमघानचत्रे श्राद्धमचय्यतृप्तिकृदित्यर्थः एतच्चापिण्ड-कज्येष्ठपुत्रिणाकर्त्तव्यं तथाचदेवीपुराणम् तत्रापिमहतीपूजाकर्त्तव्यापितृदैवते कृत्वेपिण्डप्रदानन्तुज्येष्ठपुत्रोविवर्जयेदिति तथाम-घायांपिण्डदानेनज्येष्ठःपुत्रोविनश्यतीति अत्र केचाहुः ज्येष्ठःश्राद्धगर्भोद्भवइति। तदयुक्तम्। तत्प्रतिरिक्तस्यापिज्येष्ठत्वात् तथाचशातातपः अनाद्यपुत्रोज्येष्ठोपिभ्रातापुत्रोनिगद्यतइति अतश्चज्येष्ठपुत्ररहितेनमघायासपिण्डमेवकर्त्तव्यमितिगम्यते। महाफलत्वात् एतच्चमघान्वितदिनान्तरेनत्रयोदश्यांमघायांपिण्डदानेनज्येष्ठपुत्रोविनश्यति, कनीयांस्तुत्रयोदश्यांचयाद्याश्युदयाद्दते इतुरभययोगोपुत्रिमात्रस्यपिण्डनिषेधात् अथवाविभक्तभ्रातॄणामौत्र

स्येचपुत्राभावे महाफलत्वात्पृथक्पृथगधिकारः। तथाचपैठीनसिः अत्रापिपितृगीतांगाथा छागेनसर्वलोहेनवर्षासुच मघासुच पुनीः वायेद्दिवापौत्रोयोनोदद्यात्त्रयोदशीमिति तथाविभक्ताअविभक्ता वाकुर्युःश्राद्धमदैवतम्। मघासुचततोन्यत्रनोधिकारः पृथग्वि॒त्ता चंदैवतचयाहैकोद्दिष्टं पृथगदमुभयत्रान्येविभक्ताअविभक्ताअपदैवंम-घासुचश्राद्धं पृथक्कुर्युः ततोन्यत्रपृथग्भिन्नानधिकारइत्यन्वयः। अथ-वासतद्वतिसार्वविभक्तिकस्तसिः। ततोविनादैवतंमघाश्राद्धविना-न्यत्रश्रद्धेनाधिकारइत्यन्वयः उभयान्वयेपिचयाक्रमघाश्राद्धयोरे-वविभक्ताविभक्तयोः पृथक्पृथगधिकारोन्यत्रनकिन्त्वविभक्तानैकश्रा-द्धकर्त्तव्यन्नपृथगित्यर्थः। तथाचप्रचेताः अर्वाक्संवत्सरात्सर्वेकुर्युः श्राद्धंसमेत्यवै। संवत्सरेव्यतीतेतुकुर्युःश्राद्धं पृथक्पृथक्। पठन्ति-च। एकादश्यांमघायांचजोजहृष्टस्यविधिवत्क्रिया। कुर्युर्नैकैकशः श्राद्धमाब्दिकन्तुपृथक्पृथगिति. किञ्च नवश्राद्धं सपिण्डत्वंश्राद्धा-न्यपिचषोडश। एकेनैवतुकार्याणिसविभक्तधनेष्वपि। अपिश-ब्दादविभक्तेष्वितिसंग्रहणात् यत्तु विभक्तास्तुपृथक्कुर्युःप्रतिसंव-त्सरादिकम् एकेनैवाविभक्तेषुकृतेसर्वैःकृतंभवेत्। यच्चभ्रातृणाम-विभक्तानामेकोधर्मःप्रवर्त्तते. विभागेसतिधर्मोपिभवेत्तेषांपृथक्पृ-थगितिवचनादविभक्तामश्रद्देशादावेकमेव कुर्वन्तितदशक्तविषय-मित्यविरोधः। वर्षास्विति चन्द्रमासाभिप्रायं ननुवर्षास्वित्यभिधा-नान्मासद्वयात्मकत्वात्तत्रैकमासेमघाश्राद्धमितिसन्देहः। मैवं। अपरपक्षेश्राद्धमितुपक्रमादित्यदोषः। अतश्चापरपक्षमघायामिति तथाचवृद्धयाज्ञवल्क्यः। यामुपंवापितृकंत्रापिपितृपक्षेविशेषतः तत्र सङ्कल्पनंकुर्यात्पिण्डमुष्टिदःमदेति।

## मू० मन्त्राध्यायिनःपूताः ॥ ६ ॥

पङ्क्तिपावना इति शेषः। मन्त्रशब्दः संहितावचन बहुवचनमेकद्वित्रियथापेक्षं ऋग्वेदादानेकसंहितापेक्षंवा मन्त्राध्यायित्वमात्रेणैवकेवलम्पङ्क्तिपावनाएतेपूताइतिविशेषणं। तच्चौचित्यादुत्तरत्रापिसार्वत्रिकम् मनोवाक्कायकर्मभिः। शास्त्रोक्तरत्नातिशयेननिषिद्धवर्जनेनचबाह्याभ्यन्तः शुद्धियुक्ताः पूता. इत्युच्यन्ते। अथवापूताः पञ्चविधाः। तथाचविष्णुः। तीर्थपूतोयज्ञपूत.पयः पूतः सत्यपूतोमन्त्रपूतइति उच्यते ॥

## मू० शाखाध्यायी ॥ ७ ॥

पूतः पङ्क्तिपावनइतिशेषः शाखाशब्दोमन्त्रब्राह्मणात्मकवेदापेक्षः। अंगानावक्ष्यमाणत्वात्। तथाच शङ्खः यजुषांपारगोयश्चऋचांसाम्नाञ्चपारग. अथर्वशिरसोध्येताब्राह्मणा. पङ्क्तिपावना इति।

## मू० षडङ्गवित् ॥ ८ ॥

। षडंगोवेदस्तेमर्थत. पाठतश्चयोवेत्तिसपूतस्तादृशइतिशेष. अनूचानइत्यर्थ. तथाचस्कन्दसंवादे अनूचाना श्रोत्रियाश्चब्राह्मणाः पङ्क्तिपावनाइति शिक्षाकल्पोव्याकरणन्निरुक्तज्योतिषांगतिः छन्दोविचितिरित्येते षडंगोवेदउच्यते। अत्रमन्त्राध्यायिन प्रभृत्येतावत्पर्यन्तगुणाधिक्योपक्रमादुत्तरोत्तरंप्राशस्त्यसूचितम्। अत्र कश्चिदाह षडंगानितेषामेकंवापियोवेत्तिसएवेति। तन्नोचित। बहुव्रीह्युपलब्धेः। अनूचानोक्तिपरित्यागप्रसक्तेश्च। एववेदाध्ययनेन पङ्क्तिपावनत्वमुक्तातद्र्मंभवेयाह ॥

## सू० ज्येष्ठसामगः ॥ ९ ॥

ज्येष्ठसामगशब्दोऽयं द्विधा विगृहीतः तथाहि ज्येष्ठसामसंज्ञकं साम-त्रयं यो गायति स तथा अथवा ज्येष्ठसामसंज्ञकं व्रतं तद्योगस्तस्य । चरि-तुं जानाति स ज्येष्ठसामगः ज्ञानार्थस्य गमेर्डप्रत्ययः । ततश्च ज्येष्ठसा मत्रयं गायता येन तद्व्रतं चीर्णं स ज्येष्ठसामगस्तान्नमामीत्येवमर्थद्वयम्

## सू० गायत्रीसारमात्रोऽपि ॥ १० ॥

गायन्तं त्रायत इति गायत्री ॥ सैव गायत्री तां वेदसारत्वेनो-पादाय तज्जपादिमात्रपरो गायत्रीसारमात्रः । तथा च विष्णुः । गा-यत्रीजपनिरत इति अथवा गायाः प्राणास्तांस्त्रायते गायत्री सैव गाय-त्रीसारमात्रं सर्वमन्त्रभूतं यस्य गमस्त्रान्तरं स गायत्रीसारमात्रः । तथा च श्रुतिः । सा हैषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे त-द्यद्गयांस्तत्रे तस्माद्गायत्री नामेति । मनुरपि । गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयीति । गायत्रीब्रह्मचारीति कश्चित् अपिशब्दादन्येऽपि ग्राह्याः तथा च-यमः येऽपि मन्त्रविरजसो धर्मज्ञाः शान्तबुद्धयः व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः अथर्वशिरसोऽध्येतारः सर्वे ते पङ्क्तिपावना इति ॥

## सू० पञ्चाग्निः ॥ ११ ॥

पूतस्त्वाहवनीयः इति शेषः सभ्यावसथ्यौ वेताग्नयस्त्रयः सर्वदाग्नि-होत्री अथवा पञ्चाग्नयो मनुष्येणापरिचर्याः प्रयत्नतः । माता पिता-चाग्निरात्मा गुरुश्च भरतर्षभेति महाभारतोक्ताः पञ्चाग्निः पञ्चा-ग्निर्ब्रह्मचारीति याज्ञवल्क्यः । उपनिषत् पठ्यमानपञ्चाग्निविद्या चे-त्यन्यः पञ्चाग्निरेकाग्नेरुपलक्षणम् तथा च मनुः त्रिनाचिकेत-एकाग्निरिति ।

## सू॰ स्नातकः ॥ १२ ॥

व्याख्यातचरः इहपुनस्तद्ग्रहणञ्चान्द्रायणादिव्रतचारिप्राप्त्यर्थम् । तथाचयमः । चान्द्रायणादिव्रतचरःसत्यवादिपुराणवित् । निष्णातःसर्वविद्यासुशान्तोविगतकल्मषः । गुरुवेदाग्निपूजासुप्रसक्तोज्ञानतत्परः । विमुक्तःसर्वदाधीरोब्रह्मभूतोद्विजोत्तमः । अनमित्रोनचामित्रोमैत्रआत्मविदेवच । स्नातकोजपनिरतःसदापुष्पबलिप्रियःऋजुर्मृदुःक्षमादान्तःशान्तःसत्यव्रतःशुचिः विद्वान्सर्वशास्त्रज्ञःउपवासपरायणः । गृहस्थोब्रह्मचारीचचतुर्वेदविदेवच वेदविद्याव्रतस्नाताब्राह्मणाः पंक्तिपावनाइति ।

## सू॰ त्रिणाचिकेतः ॥ १३ ॥

पंक्तिपावनइतिशेषःअन्वाङ्कः । तत्रशब्दवैश्राजश्रवसःसर्ववेदसन्ददावित्यादावनुवाकेचतुर्थेपठ्यमानेत्रिणाचिकेतनाम्नोमुनिपुत्रस्यप्रश्नत्रयविषयउच्यतेइतिव्युत्पत्त्याचिनाचिकेतस्तत्पाठस्तदर्थोध्यांब्राह्मणोपित्रिनाचिकेतइति । त्रिस्थितोनाचिकेतोग्निर्येनसइत्यन्यः । तन्नोचितम् । त्रिणाचिकेतशब्दस्ययौगिकस्यपरिभाषिकस्यवाविवक्षितत्वात् । तथाहि कितज्ञानेधातुःव्रतातिशयेनतपोविशेषेणचतृणवत्सर्वंमाचिकेतिजानातीतितृणाचिकेतः तथाच ब्रह्मपुराणम् । आचिकेतीतियोविश्वंतृणवत्सर्वनिस्पृहः तृणाचिकेतःसगृहीरागद्वेषविवर्जितइति पठन्तिच फलमूलदधिक्षीरगोमयांबुहुताशनः त्रिणाचिकेतउक्तोसौयोन्नं त्यजतिनित्यशइति । अथवा अध्वर्युर्वेदभागस्तद्व्रतोनियतोद्विजः त्रिणाचिकेत.सप्रोक्तस्तद्योगात्पुरुषोपियइतिब्रह्मपुराणोक्तोवा ।

(१) त्रिणाचिकेतोयजुर्वेदैकदेशस्तद्व्रतञ्चरन्सइतिकर्कः ।
गदाधरस्तु अध्वर्युर्वेदभागस्तद्व्रततदुभययोधोतृत्वकरोतिसोपितद्योगात्त्रिणाचिकेत ॥

## मू० त्रिमधुः ॥ १४ ॥

ब्राह्मणइतिशेषः त्रिमधुऋग्वेदैकदेशस्तद्व्रतञ्चतदाचरणेनत-
दध्यायीत्येके त्रिमधुरथर्ववेदव्रतन्तच्चारीत्यन्ये । अपरेत्वेवमाहुः
वीथिवीणिविश्वदानिविद्यायोनिश्चकर्मच ॥ पुरुषत्रयविख्याता-
स्त्रिमधुः परिकीर्तितइति ॥

## मू० त्रिसुपर्णी ॥ १५ ॥

पङ्क्तिपावनइतिशेषः । त्रिसुपर्णमृग्यजुषयोरेकदेशस्तद्व्रतञ्च
तदाचरणेनतद्व्रताध्यायीत्रिसुपर्णीत्येके तैत्तिरीयशाखापठितस्य-
ब्रह्मनेनुमात्याटिब्राह्मणास्त्रिसुपर्णं पठन्त्याआसहस्रात्पंक्तिंपुन-
न्तितेसोमम्प्राप्नुवन्तितस्यानुवाकत्रयस्याध्येतोगन्यतश्चाध्येतात्रिसु-
पर्णइत्यन्येयथोचुः पितरः सप्तपूर्वेचयज्वानोभूरिदक्षिणाः । यस्ये-
ह्यस्यमातृवंशस्त्रिसुपर्णीतिसस्मृतइति ॥

## मू० द्रोणपाठकः ॥ १६ ॥

पूतस्ताहगइतिशेषः । द्रोणशब्दोऽत्रयवहृत्तिः । धर्मद्रोण-
इत्यर्थः । तथाचगोभिलसूत्रम् धर्मद्रोणपाठकइति धर्मद्रोणोधर्म-
शास्त्रं । तथाचस्कन्दसम्बादे । पुराणस्मृतिवेत्तारः ज्ञातव्याकरण-
श्रमाः अनूचानाः श्रोत्रियाश्चब्राह्मणाः पंक्तिपावनाः यमोपि
मन्त्रब्राह्मणविच्चैवयश्चस्याद्धर्मपाठकइति ॥

## मू० ब्राह्मोढापुत्रश्चेतिपंक्तिपावनाः ॥१७॥

ब्राह्मविवाहेनोढा ब्राह्मोढास्तत्पुत्रः पूतः पंक्तिपावनइत्यर्थः
चकारोब्राह्मोढापत्यादिसमुच्चयार्थः तथाचशङ्खः । ब्रह्मदेयानुसं-
तानोब्रह्मदेयाप्रदायकः । ब्रह्मदेयापतिश्चैवब्राह्मणाः पंक्तिपाव-
नाइति । ब्रह्मदेया ब्राह्मविवाहेनदत्ता तदनुसन्तानस्तत्सन्ततिः ।

इतिशब्द आद्यर्थेन समाप्तौ इत्याद्यन्येपीत्यर्थः। तथाच मनुः। वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः शतायुश्चेति विज्ञेया ब्राह्मणाः पंक्तिपावना इत्यादि। ब्रह्मचार्यधीयानः जटिलस्त्वनधीयानमित्यनधीयानस्यतेनैव गतिपिहितत्वात्। यमोपि। गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव चेति चतुर्वेदविदिति ब्रह्मचारिविशेषणत्वात् सहस्रदो गवां सुवर्णस्य वा स्कन्दसंवादेपि अग्न्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। दानयज्ञतपः सत्यतीर्थपूताः कुलान्विताः श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावना इति

## सू० वागीश्वरो याज्ञिकश्च पावनाः ॥ १८ ॥

उच्यते सर्वमनयेति वाक् व्याकरणं ईश्वरशब्दः समर्थव्याख्यातृपरः यज्ञं वेत्तीति याज्ञिकः क्रतूक्थादित्वाट्ठक् पुनः पावनग्रहणम् पंक्तिपावनेष्वपि पावनत्वज्ञापनार्थं तथाचोक्तं यश्च व्याकुरुते वाचं यश्च मीमांसते ध्वरम्। उभौ तौ पुण्यकर्माणौ पंक्तिपावनपावनाविति चकारोन्यत्समुच्चयार्थः तथाच हारीतः यदेकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते अटेत पृथिवीं सर्वां सशैलवनकाननां यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकम् तदा तृप्यति पिता यत्नु पाहु पितामहः। पितुः पितामहमाम्नाच्छन्दोगेभ्यो धिकोहरतद्दूति अक्षरचिन्तकः सामविभागज्ञः तथाच गोभिलः आ भ्लिते चवेदोस्यादि पुत्रास्तु प्रमांश्चमेव अतिमहांश्च तत्रैतत्पत्र ज्ञोयात् समंततः भुक्ताचाय्य पदस्तो भांजपेत्तवसमाहितः गोसूक्तास्वाश्वसूक्तश्च चन्द्रसूक्तञ्च सामनी तरत्समस्यय सामतच्चजर्हैस्कधीर्बुधः गांत्रासीनः शुचौ देशे वामदेव्यन्ततोजपेत् एवंसामभिगाच्छन्नो भुञ्जानस्तु द्विजोत्तमः श्राद्धभोजनदोषैश्च महद्भिर्नोपलिप्यते। अन्यथै

दक्षिभुग्भागोऽव्यकव्ये पुरुषत्ववित् आत्मानमन्नदातृ श्वगमयत्वासु रौद्रमिमिति। आज्यदोहंविदोऽइत्याद्या आज्यदोहाः सुरूपकृत्नुम तयेषिवासोममिन्द्रमन्दत्त्वा। खादोरित्याविविपूवतइति अध्वान्तर्गदितामूत्पन्नानि सामानीत्यत्पन्नानि सामानिकृपभाःस्त्रियः पुराजितोवाम्यसदृति। अथर्मिरक्षारश्येयथावाविति अमीनवतेअन्दुश्द्दति अध्वान्तर्गदितासूत्पन्नानि सामानिचनिपङ्गाचत्वारः घर्तो दिवःपचते रथ्योत्तरसदूलादि घट्सुत्पन्नानि सामानिषदस्तोमाः गोमूत्रानिसर्वसामगमसिद्धानि। अश्वसूक्तंप्रसिद्धं यदिन्द्राहं। यदारमस्मांगोति भेदेनेन्द्रशुद्धसामानो। एतोन्विन्द्रंस्तवामेत्यसांचामदयंतररसमन्दोधावतीत्येकम्। कयानश्चित्रआभुवेत्यादि वामदेव्यम्। एवंसामभिराच्छन्नोरचितः। आदभोजनदोपैर्नलिप्यते मन्त्रविदित्यर्थः।

## मू० नियोज्याभावेप्येकंवेदविदम्पङ्क्तिमू र्द्धनिनियुञ्ज्यात्॥ १८॥

नियोज्याः पूर्वोक्ताःमृत्युक्ताश्च तेयामभावप्राप्तौ एकम्वेदविदविदंवेदार्थज्ञमेव मुख्यपंक्त्यादौ नियुंज्यादुपवेशयेत्। तेनैवेतरपंक्त्युपविष्टाअमुख्याः पूताभवन्तीत्यर्थः। अथवावेदविदवेदपारगम् तच्च लक्षण उत्पत्तिप्रलयौचैव भूतानामगतिञ्चतिम् वेत्तिविद्यामविद्याञ्चसभवेद्वेदपारगइति अविगब्दोभावेनुकल्प विशेषसमुच्चयार्थः। तथाचापस्तंवः। ब्राह्मणान्भोजयेद्ब्रह्मविदो योनि गोत्रमन्त्रान्तेवासिसंवन्धीनिति योनिसंवन्धाः मातुलश्वशुरादयः। गोत्रसंवन्धाः सपिण्डसगोत्रादयः मन्त्रसंवन्धावेदमन्त्रादि अनुशिष्टाः। अन्तेवासिसंवन्धाः शिष्यानुशिष्यादयः एवंविधसंवन्ध रहितानभावेसो-

जयेदित्यर्थः। ननुचाभावोपिपिशिष्यानित्यत्वापि शब्देनानुकल्पसंगृहीतस्तत्कथं पुनरिहापिशब्देनानुकल्पे विशेषाभिधानमिति। उच्यते अनुकल्पेपिविशिष्ट विध्यर्थमित्यदोषः। तेनमातामहमातुलस्वस्त्रीयंश्वशुरंगुरुं दौहित्रं विट्पतिंबन्धु मृत्विग्याजौचभोजयेदित्यत्र मन्वादियचनेइति विशेषेणबन्धुमातुलशिष्याणामनुकल्प उक्तास्तत्रविशेषविधिः पुनरपिशब्देनगृहीतइत्यर्थः। तथाचपराशरः पञ्चभिःपुरुषैर्युक्ता यथाद्धे याष्टगोत्रिणः। षड्भ्यस्तुपरतः पुंभ्यः श्राद्धे भोज्याःस्वगोत्रिणः। पञ्चभिर्युक्ताः पञ्चपुरुषपर्यन्तं श्राद्धेया इत्यन्वयः। मातुलेतुस्कन्दसंवादः स्वमाहिमातुलसुतां यस्तामुद्वहतेद्विजः गुरुतल्पगएवासौ सचास्यात्पङ्क्तिदूषकः सचेतिमातुलः शिष्यस्त्वधनहारीति विशिष्टविधिरिति। श्वसुरस्वस्त्रीयादीनां गुणत्वविधिर्निर्गुणत्वे योनिसंबन्धत्वेननिषेधइत्यविरोधः। नियोज्याभावेवेदविदेकेनैव सिद्धिरित्यत्रहेतुमाह॥

# सू० आसहस्रात्पङ्क्तिं पुनातीतिवचनात्।२०॥

यतः सहस्रविप्रयुतांपङ्क्तिमेको वेदवित्पुनातीतिवचनन्तस्मादेकमपिताद्दशंपङ्क्ति मूर्द्धन्युपवेशयेदित्यर्थः वचनञ्चात्रभवति तेषामेकंपङ्क्तिमूर्धनियुक्तो वेदवित्सहस्रैरप्युपहतपूतां पङ्क्तिंपुनातीति। नित्यंयोगपरोविद्वान्समलोष्टा श्मकाञ्चनः। ध्यानशीलोयतिः शान्तोब्राह्मणः पङ्क्तिपावनइति। वर्ज्यानाहमनुः यस्तेनाःपतिताः क्लीवायेचनास्तिकवृत्तयः। तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् जटिलंवानधीयानन्दुर्बालम् कितवन्तथा। याजयन्तिचये पूगांस्तांश्चश्राद्धेनभोजयेत्। चिकित्सकान्देवलका न्मांसविक्रयिणस्तथा विपणेनचजीवन्तो वर्ज्याःस्युर्हव्यकव्ययोः। प्रेष्योग्रामस्यरा-

श्च कुनखीश्यावदन्तकः। प्रतिरोद्धागुरोश्चैव त्यक्ताग्निर्वार्द्धुषि स्तथा यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः ब्रह्मद्विट्परिवित्तिश्चगणाभ्यं तरएवच कुशीलवोवकीर्णीच वृषलीपतिरेवचपौनर्भवश्चकाणश्चयस्य चोपपतिर्गृहे भृतकाध्यापकश्चैवभृतकाध्यापितस्तथा। शूद्रैर्यौनैश्चसंबन्धैःसंयोगम्पतितैर्गतः आगारदाहीगरद्‌कुण्डाशीसोमविक्रयी। समुद्रयायीवन्दीचतैलिकःकूटकारकः पित्राविवदमानश्च(१)कितवोमद्यपस्तथा पापरोग्यभिशस्तश्चदांभिकोरसविक्रयी धनुःशराणांकर्त्तायचयश्चाग्रेदिधिषूपतिः मित्रध्रुग्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच भ्रामरीगण्डमालीचश्वित्र्यथोपिशुनस्तथा। उन्मत्तोन्धश्चवर्ज्याःस्युःवेदनिन्दकएवच हस्तिगोश्वोष्ट्रदमकोनक्षत्रैर्यश्चजीवति पक्षिणांपोषकोयश्चयुद्धाचार्यस्तथैवच स्रोतसांभेदकश्चैवतेषांचावरणे रतः गृहसंवेशकोदूतो वृक्षारोपकएवच। श्वक्रीडीश्येनजीवीचकन्यादूषकएवच हिंस्रोवृषलवृत्तिश्चगणानांचैवयाजकः आचारहीनःक्लीवश्चनित्ययाचनकस्तथा कृषीजीवीशिल्पजीविसद्भिर्निन्दितएवच औरभ्रिकोमाहिषिकः परपूर्वापतिस्तथा प्रेतनिर्यातकश्चैववर्जनीयाःप्रयत्नतः। एतान्विगर्हिताचारानश्राद्धेयान्नराधमान्। द्विजातिप्रवरोविद्वानुभयत्रविवर्जयेदिति एषामर्थाः स्तेनोब्रह्मस्वान्यद्रव्यहारी तस्यपतितत्वेनोपादानात् नास्तिकानास्तिकधर्मफलमित्यभिमानिनस्तेषांसर्वेषांते जटिलोब्रह्मचारीअनधीयानस्तद्विशेषणम् अधीयानस्त्वश्राद्धेयस्यात् दुर्बालःखल्वाटकःकपिलकेशीवा दुश्चर्मितिकश्चित् क्लितरोद्धृतासक्ताः पूगयाजकागणयाजकाः चिकित्सकाभिषजः देवलकाधनार्थंदेवार्चकाः देवार्चनपराविप्रोवित्तार्थीवत्सरत्रयम् असौदेवलकोनामहव्यकव्येषु गर्हितइतिवचनात्

(१) कैकरइतिपाठान्तरम्॥

मांसविक्रयिणश्चापण्यपि विपणेन च जीवन्सङ्ग्रहेनैव निषेधसिद्धौ-
प्रेष्योधनार्थमादेशकारी प्रतिरोद्धाविरोधी त्यक्ताग्निर्विहितत्याग
स्तिनैवोऽशायाग्नित्यागी वार्धुषिःद्रव्यवृद्ध्युपजीवीयथाऽसमर्थधान्य-
मुद्धृत्यमहर्घ्यं यःप्रयच्छति सवैवार्धुषिकोनामेति यक्ष्मीक्षयी पशु-
पालोनापदिहत्यर्थः । परिवेत्ताऽकृतविवाहाधानेज्येष्ठेभ्रातरि-
कृतदाराग्निसंग्रहः निराकृतिरधीतनष्टवेदः अधीत्यविस्मृतवेदे-
भवेद्विप्रोनिराकृतिरिति देवलोक्तेःयस्त्वाधायाग्निमालस्याद्देवा-
दीन्नेभिरिष्टवान् निराकर्त्ताऽमरादीनांसविज्ञेयोनिराकृतिरितिवा
ब्रह्मद्विट्ब्राह्मणद्वेषी नानाजातीयाअनियमकृतयोगणास्तन्मध्य-
वर्त्तीगणाभ्यन्तरः ग्रामीणइतिकश्चित् कुशीलवोनटवृत्तिः अव-
कीर्णीस्खलितब्रह्मचर्यः वृषल्यनेकविधातत्पतिः । तथाच वंध्यातु-
वृषलीज्ञेयावृषलीचमृतप्रजा चाण्डालीचरितायाचकुमारीयार-
जस्वलेति । स्कन्दसंवादोक्तेः. रस्याद्वैभार्यायाः. उपपतिर्जारः ।
वाग्दुष्टोनिष्ठुरः । पुनर्भूरनेकविधातत्पुत्रःपौनर्भवः भृतकोभृत्वा-
परिक्रीतोध्यापकः तेनैवाध्यापितस्तच्छिष्यःगुरुश्चेच्छूद्रस्त्वनुप-
क्तः अकारणमपातित्यत्तेनपित्रोर्गुर्वोश्चत्यागी ब्राह्मैरध्ययना-
ध्यापनैर्योनैर्वैवाहिकैःसंबन्धैःपतितैःसावित्रपतितैर्व्रात्यैश्चयःसयो-
गंगतःसविवर्जितः गरदोविषदोऽग्निप्रादन्येपांतस्यदानीमद्यापात
कित्वेनसंग्रहात् कुण्डगोलपक्षाभितावत्परिमितान्नभोजी जार-
जान्नभक्षीत्यन्ये. । समुद्रयायीनौकया समुद्रोल्लङ्घमानः । केकरो-
ध्यार्द्धदृष्टिरितियावत् । मद्यपोद्राक्षादिमद्यपः । पापरोगीकुष्ठा-
दिनिन्द्यरोगी । अभिशस्तोवाच्यमुक्तः । दाम्भिकः पाखण्डकुटध-
र्मधारी रसविक्रयीगुडलवणादिविक्रेता अग्रेदिधिषूपतिर्ज्येष्ठा-
यामनूढायांकनिष्ठोढातस्यपतिरिति दूतवृत्तिजीवकः । पुत्राचार्यो-

अरपाठकः । पुत्रानुशिष्ट इति कश्चित् । भ्रामरी भ्रमरवद्याजकः ।
अपस्मारीति कश्चित् । गृहसंवेशको वास्तुविधर्मे वर्त्तमानः मूल्यो-
गृहकारीत्यन्यः हस्तिगोऽश्वोष्ट्रदमको दमनेन जीवनः नक्षत्रैर्ज्योति-
षज्ञत्वाजीवकः युद्धाचार्यो युद्धोपदेष्टा तदुपायी स्रोतसांभेदकःस्रो-
तोनिरोद्धा तेषामावरणे रतः सेतुकृत् दूतो दूत्यवृत्तिः वृक्षारोपको-
ऽस्त्यर्थः श्वक्रीडी श्वभिः क्रीडावान् कन्यादूषको मूल्यादिनायोनि-
विदारकः वृषलपुत्रो वृषल एव पुत्रोऽस्य नान्यः क्लीबो धर्मोद्यमशून्यः
पण्ढस्योक्तत्वात् सद्भिर्निन्दितोऽकारणे पित्र्यधर्मात्त्यक्तपिजीवी विशेषणं
चीर्णव्रतागुणैर्युक्ता भवेयुर्येऽपिकर्मकाः सावित्रीपतिताःक्रियावन्तस्ते-
राजन्केनराधमाइति धार्मिककार्यकाम्यनुष्ठानात् चौरश्चि-
कामेषपोषकः माहिषिको महिषीपालः व्यभिचारिणीपुत्रः महि-
षीत्युच्यते भार्या सा चैव व्यभिचारिणी तस्यां यो जायते गर्भः स वै मा-
हिषकः स्मृतः इति वचनात् परपूर्वामागन्यमदत्ता तस्याःपति.परि-
वेत्ता द्वितीयविवाहे मसंस्कृत्येत्यपौनर्भवो पुनर्वा प्रेतनिर्यातको मू-
ल्येन प्रेतहारकः अपांक्तेयामित्येषांपंक्तावपि न भोक्तव्यमित्यर्थः उभ-
यत्रेति दैवेपित्र्ये यमोपि काणाःकुण्डाश्च पण्ढाश्च क्लृप्ताश्च गुरुतल्प-
गाः ब्रह्मघ्नाः सुरापाश्च स्तेनगोघ्नाश्चिकित्सकाः राष्ट्रकामान्तयोन्मत्ताः
पशुविक्रयिणश्चये मानकूटास्तुलाकूटाःशिल्पिनोग्रामयाजकाः रा-
जभृत्यश्चबधिरामूकाश्च लजाटपुंगवाः वाणिज्यंमधुहर्तारोगरदावन
दाहकाः समयानां च भेत्तारः मद्यानां ये निवारकाः प्रष्टक्षेपनिह-
न्ताश्च दृष्याप्रव्रजिताश्चये यश्च प्रव्रजिताज्जातः प्रव्रज्यावसितश्चयःस-
मुद्रयायीयांसाधीकेशविक्रयिणश्चये अवकीर्णीचवीरघ्नोगुरुघ्नःपित-
दूषकः अस्यार्थः गुरुतल्पगः गुरुराजगुरुश्च पुत्तमाधमलनस्त्रियःसु-
तास्वसमगोत्रगमन गुरुतल्पगउच्यते इत्येवंलक्षणः राष्ट्रकामान्तप-

धर्माभिलापवः मानकूटाधान्यादिमानपात्रवञ्चकाः मधुहर्त्तारो-माचिकचौराः प्रव्रज्योपनिवृत्ताः संन्यासिनःइयाप्रव्रजित. पुत्रा-गन्तुत्पादेऽवमन्यासीप्रव्रज्यावसितोनवविधप्रत्यवसितोपलचकः वा तांगीभुक्तं चमिरराजालसयापुनर्भोजी केशविक्रयीचामरादिवि-क्रेता वीरघ्नस्त्यक्ताग्निः पुत्राचाशाऽपाठयता । शासनाप्रदानान्स्म-तपुत्रस्यस्मृतिप्रदोषात् स्कन्दमंवादे । वर्जयेत्कुण्डगोलौतुना स्तिकं रंगजीवनम् । जपहोमविरक्तञ्चशाकुनंराजसेवकम् चिकि-त्सकञ्चगणकञ्चितवंहेतुवादिनम् इयामिषपरित्यागिहयापाकभु-जोद्विजो ब्राह्मणायेविकर्मस्थावेडालवृत्तिकाःशठाः रोगहीनाति-रक्तांगाःक्रूरोधूर्त्तपुरोहितो चनधायायेष्वधीयानाः सूचकघ्ननियाम-काः स्त्रीजितश्चकदर्यश्चसुदूष्यश्चाहितुण्डिकः ग्रामयाजीशूद्रया-जीवेदसोमोपजीवकद्रत्यादि । अस्यार्थः कुंडगोलौप्रसिद्धौ रंगजो-बीवस्त्रादिरञ्जकः शाकुनःपक्ष्युपजीवी हेतुवादीतर्कबलेनसर्वत्रसं-शयकृत् इयेतिश्राद्धादीनांसत्यागी एवंपाकरुचिः विकर्मस्थोनि-षिद्धकर्मी वेडालव्रतिकःपारिभाषिकः तथाचयस्यधर्मध्वजोनि-त्यंसुरध्वजद्रवोच्छ्रितःप्रच्छन्नानिचपापानिवैडालंनामतद्व्रतं तदस्या-स्तीतिवैडालव्रतीकोलोकदम्भकद्रत्यर्थः। तथाच । धर्मध्वजीसदा-लुब्धःछद्मिकोलोकदंभिकः । वैडालव्रतिकोज्ञेयोहिंस्रः सर्वातिस-न्धकद्रति शठोवञ्चकः । अनध्यायेष्वपूर्वपाठी सूचकोराजकर्ण-जपः नियामकोनिवादद्रष्टा कदर्यः परिभाषिकः यथा आत्मान-न्धर्मंकृत्यञ्च पुत्रदारांश्चपीडयेत् । लोभाद्यःपितरोभृत्या न्सकदर्य-द्रतिस्मृतद्रति । सदूष्य.कुत्सिताचारः अहितुण्डिकःसर्पदन्तोत्पाटी इचयाज्ञवल्क्येऽपि । सदासेवीचसत्वाटः क्षुप्रतिग्रहकारकः अज्ञात सुरागोदोषोद्दिन्नयः शिल्पिकर्मकृत् । अव्रतानासुपाध्यायः काण्ड-

पृष्टाश्चयेद्विजाः। अयतिर्मोचवादीच चतुर्थाश्रमवर्जितः कुणपायुधजीवीच पुत्रप्रतिनिधिश्चयः। धर्माचारविहीनाये श्राद्धे ह्येतान्विवर्जयेत्। अस्यार्थः अव्रतानामुपाध्याय इत्यत्तरादिशिचकः काण्डपृष्ठा मातुलस्यसुतोद्वाही विप्रोयश्चाङ्गजीवकः। काण्डपृष्ठस्तुविज्ञेयः श्राद्धेयञ्चातिनामिपमित्युक्तः। तथा हिजशाघनिकायेच पुत्रप्रतिनिधिस्तथा सर्वेतेह्यखिलाःप्रोक्ताः काण्डपृष्ठानराधमाः। हारीतोपि शूद्रापुत्रश्चदत्तश्चये तथाक्रीतकासुतः। सर्वेतेमनुनाप्रोक्ताः काण्डपृष्ठाद्विजाधमा इति अयतिर्गृहस्थोमोचवादी मुक्तिवादेरतः तथाचब्रह्माण्डे। श्राद्धार्हेगुणयोगेपिनैतेजातुकथञ्चन निमन्त्रणीयाश्राद्धेषु सम्यक्फलमभीप्सतेति। श्राद्धार्हागुणावेदाध्ययनादयः। शेषंस्मृतिभ्योविज्ञेयमित्यलं प्रपञ्चेन।

इ तिश्रीकण्वमिश्रकृतौश्राद्धक शिकायांसूत्रवृत्तौ

अयश्राद्धप्रकरणं समाप्तम्॥

अष्टमी कण्डिका च समाप्ता।

---

इत्थंश्राद्धोपयोगि सर्वमभिधायेदानीं गृहस्थस्यकाम्य कर्मोचित्याच्छ्राद्धेषु काम्यकालानुपचिक्रंसुः सूत्रमारभते॥

## सू० अथकाम्यानिभवन्ति॥ १॥

श्राद्धानीतिशेषः तत्राथशब्दःकाम्यार्थः। नकेवलन्तियएव काम्यकालाःकिन्त्वन्येपि स्मृत्युक्ताज्ञेयाइत्यर्थः। तथाच संक्रान्तिविषुवच्चैव विशेषेणायनद्वयं। व्यतीपातोजन्मऋक्षंचन्द्र सूर्यग्रहौतथा तिथिनक्षत्रराशिश्च वृद्धिश्चाभ्युदयस्तथा। एतांस्तुश्राद्धकालान्वैकाम्यानाह प्रजापतिरिति। संक्रान्तिविषुवायनादित्यनयोः पुण्यातिशयेन विशेषोपादानात्। व्यतीपातस्त्रिविधः महाल्पनित्यभेदेन

तथाच सिंहस्थौशुक्रभौमौच मेषस्थौचरविशिति:। द्वादशीहस्तसंयु क्तात्व्यतीपातो महांस्तु स: अल्पस्तु। श्रवणाश्विधनिष्ठा द्रीनागदैवत मस्तकै यद्यमारविवारेणव्यतीपात: सउच्यते। इत्युक्त: नित्योनित्ययोग: अभ्युदय.शरीरोपचयादि:। अन्येपिस्मृत्यन्तरोक्तायोगाज्ञातव्या: एतेषुश्राद्धविधानं स्मृत्यन्तरेभ्यउपलब्धव्यम् ग्रन्थगौरवभयान्नेहलिखितम्। ननुचायशब्दोनस्मृत्युक्त कालस्यासंगृहीतत्वादत्र भाद्रपदीमारभ्यकिमिति श्राद्धं सूत्रकृतायुक्तिम्य एवेत्यविरोध:। तस्मात्पौर्णमास्यामेवोपक्रम: श्राद्धषोडशकस्येतिप्रागुक्तम्। तथाच वायुपुराणं पुष्टिप्रजांस्मृतिंमेधां पुत्रानैश्वर्यमेवच। कुर्वाण:पौर्णमास्यान्तुसम्पूर्णं फलमश्नुते। प्रतिपद्धनलाभायेत्युपक्रम्य अमायाञ्चप्रयत्नेन श्राद्धंकुर्याच्छुचि:सदा। सर्वान्कामानवाप्नोति स्वर्गस्थानंसमश्नुतइति श्राद्धषोडशकप्रतीतं। प्रपञ्चितञ्चास्माभिरादि सूत्रव्याख्यानेनकर्म्मणेति। फलानितिविध्याह॥

## मू० स्त्रियोऽप्रतिरूपा:प्रतिपदि॥२॥

श्राद्धकृल्लभतइतिशेष:। अप्रतिरूपा: अद्वितीयरूपा: स्त्रियो- भार्या: एतच्चकामनान्तरोपलक्षणम्। तथाचमनु: कुर्वन्प्रतिपदि श्राद्धं सुरूपांलभतेसुतामिति। वायुपुराणेपि प्रतिपद्धन लाभायलब्धस्यास्यननश्यतीति। कन्यामिति याज्ञवल्क्यइत्यादि अत्रैतच्चिन्त्यते। मृतपितृकोजीवन्मातामह: किंपट्पिण्डकंश्राद्धंकुर्याद्दुतत्रिपिण्डकमिति। अत्रकेचाहु: द्विपार्वणस्यविहितत्वात् जीवन्मातामहस्यमातिक्रम्यापिकुर्वीतेति। तथाचमनु: ध्रियमाणेतुपितरि पूर्वेषामेवनिर्वपेत्। विप्रवद्वापितंश्राद्धे स्वकं पितरमाशयेत् पितायस्यतुवृत्त:स्याज्जीवेच्चापिपितामह: पितु: सनामसङ्कीर्त्य कीर्तये

अपितामहं । पितामहोवातच्छ्राद्धम् भुञ्जीतेत्यब्रवीन्मनुरिति तद्विचारितरमणीयं । अस्य नार्द्धश्लोकद्वयस्य साग्नेरन्वाहार्यादिनियतश्राद्धविषयत्वात् । तथाचनिगमः योवाजीवत्पितृश्चात्तंपिण्डस्थानद्वये के जीवतांवादेयमिति हिरण्यकेतुः । कस्माद्राद्धविधित्वाद्धशाङ्कत्वादिति । नन्वेवञ्जीवत्पितृकस्य होमान्तमनारंभोवेति कात्यायनेनान्वाहार्यादिनिषेधात्कथमेवमिति सत्यम् कात्यायनेनोक्तेर्वाजसनेयि मात्रनिषेधविषयत्वा दितरसाम्नीनांमनुवचने जीवदितिक्रमविहितत्वात् । किञ्चाथोन्तरंसूत्रस्थवाजसनेयि मात्रस्यपितास्यांशेजीवति तदाहोमान्तमनारंभोवाविधाप्यितः । यदिचसंन्यासीपतितोवा जीवति तदावाजसनेयिनोपिजीवदितिक्रमः सूत्रकृतोभिप्रेतइति । तथाचकात्यायनः ब्राह्मणादिहतेताते पतितेसङ्गवर्जिते । व्युत्क्रमाच्चमृतेदेयं येभ्यएवददात्यसाविति । किञ्च नजीवत्पितृकःकुर्याच्छ्राद्ध मग्निमृतेद्विज. येभ्यएवपितादद्यात्तेभ्यो दद्याच्चसाग्निकइत्यनेनसाग्निजीवत्पितृकस्येनातिक्रमोविहितो ननिरग्नेरिति । अपिच दर्शश्राद्धंगयाश्राद्धंश्राद्धं चापरपक्षिकं नजीवत्पितृकःकुर्यात्तिलैः कृष्णैश्चतर्पणमित्यादौपितृग्रहणम् जीवन्मातामहादापलक्षणमतेनापिजीवन्मातामहस्यनिषेधः अन्यच्च । उद्वाहेपुत्रजननेइत्यत्रापिपङ्ग्रहणेनापरपाक्षिकन्नविहितम् । यत्तु जीवत्पितरिवैपुत्रः श्राद्धकालंविवर्जयेत् तेषांवापिपितादद्यात्तेषामेके प्रचक्षतेइतिहारीतोक्तिः यच्च पितुः पितृभ्योवाददात्सपितेत्यपरा श्रुतिरिति । कात्यायनादिभिरुक्तम् तत्सपिण्डीकरणविषयमाभ्युदयिकविषयंवा तथाच हवीतोर्यंच सन्यस्तेतातेचपतितेसति । एभ्यएवपितादद्यातेभ्योदद्यात्स्वयंसुतःयत्पुनः पितरोयत्रपूज्यन्तेतत्रमातामहध्रुवम् अविशेषेणकर्तव्यं-

विशेषान्नरकंव्रजेत् यत्र पिण्डास्तु: षडितिस्थितिरित्यादिवचनम्
द्दवमातामहश्राद्धविधायकं तन्मातृवर्गद्वयविषय मित्यविरोधः।
तस्मान्मीन्मातामहकर्तु. पितृवर्गोद्देशेनैव त्रिपिण्डकंश्राद्धमित्यु-
चितं तथाचस्मृतिः। पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेस्र-
यदिवर्गादौतद्वर्गं स्र परित्यज्येत्। चशब्दोमातामहीसंग्रहार्थः प्र-
जापतिरपि संक्रान्त्या सुपरागेचपर्वोत्सवमहालये। निर्वपेद्दवपि-
ण्डांस्त्रीनितिप्राह प्रजापतिरिति। अतएवप्रार्त्तैकवर्गं श्राद्धस्यत्र-
योदश्यांनिषेधः। श्राद्धन्नैकस्यवर्गस्य त्रयोदश्यामुपक्रमेदिति एव-
मन्यपंत्तावपि। अत्रचजीवेत्स्र यदिवर्गादावित्यनेन वर्गादावेवजी-
वतोनातिक्रमो नजीवत्पितामहा देरपीत्ययोदुक्तम्। तेनमृतपि-
तृकोजीवत्पितामहादिकमति क्रम्यापिदद्यादित्यर्थः। तस्मान्निर-
ग्निजीवत्पितृकस्य सपिण्डनाभ्युदयिक श्राद्धयोरेवसाग्नेस्तु सर्वं
श्राद्धेपुजीवदतिक्रमेण श्राद्धं नैतरत्रेतिचतुरस्रम्॥

## मू० द्वितीयायांस्त्रीजन्म॥ २॥

श्राद्धकर्तुःस्यादितिशेषः स्त्रीजन्मेतिकन्याजन्मेत्यर्थः। तथाच
मनुः कन्यकास्तुद्वितीयायामिति उपलक्षणञ्चैतत्। तथाचवायु
पुराणम् द्वितीयायान्तुयःकुर्या द्विपदाधिपतिर्भवेत्। मार्कण्डेयोपि
द्वितीयाद्विप्रजाप्रदेति। कन्यावेदिनइति याज्ञवल्क्यइत्यादि क-
न्यावेदीजामाता। अत्रैतच्चिन्त्यते किमवपितामहादि तिथौपौ-
त्रेण श्राद्धकार्यमुतनेति। तत्रकेचिधिकाराभावान्नेत्याहुः तदयुक्तम्
विहितत्वात्। तथाचस्वल्पमात्स्यं नान्दीमुखानामप्रस्यद्दं कन्याराः-
शिङ्गतेरवौ पौर्णमास्यास्वकर्तव्यम वाराहवचनंयथेति। नान्दीमु-
खाःपितामहादयः चकारादन्यतिथावपि। तथाचवृद्धयाज्ञवल्क्यः

कुरुपूर्णेन्दुपञ्चम्यांयः श्राद्धङ्करुतेनरः। कामिकन्तुवरंपुत्रं लभतेनात्रसंशयः। तथाच कांचन्तिपुत्रपौत्रेभ्यः पायसंमधुसंयुतम् तस्मान्नौसवविधिनातर्पये त्पायसेनत्विति। पूर्णेन्दुप्रौष्ठपदी अयन्तुविशेषः पितृपूर्वमिति॥

# मू॰ अष्टास्तृतीयायाम्॥ ४॥

श्राद्धकर्त्तुरितिशेषः। उपलक्षणञ्चैतत् तथाचमनुः। तृतीयायांसंवन्धिनइति वायुपुराणेपि नराःथिनांतृतीयाचशत्रुघ्नीपापनाशिनीति। अत्रैतदुच्यते भरण्यादावलक्षिमपिण्डकस्यादुतनेति। तननिषेधादपिण्डकमित्येके तन्न तिथिनिमित्तकत्वात् तथाच नक्षत्रयोगादियुक्तेपितद्दिनेपिण्डपातनम्। तथा तिथिनक्षत्रयोगेषुप्राधान्यन्तुतिथेःस्मृतं। तिथिमूलानिसर्वाणियथाद्रव्येणयादिकमिति। यत्तुभरण्यादौतन्निषेधः सनक्षत्रादिनिमित्तकविषयः प्रपञ्चितन्तदादिसूत्रे॥

# मू॰ चतुर्थ्यांक्षुद्रपशवः॥ ५॥

कर्तुःस्युरितिशेषः। क्षुद्राअजादयः। उपलक्षणञ्चैतत्। तथाचवायुः। श्राद्धञ्चतुर्थ्यांकुर्वाणः शषिरिकद्राणिपश्यतीत्यादि अत्रैतच्चिन्त्यते किमत्रमातृतिथौमातृश्राद्धं पृथक्स्यादुतनेति। तत्रैकेआहुः। अन्वष्टकासुवृद्धौचगयायाञ्चक्षयेऽहनि। मातृश्राद्धं पृथक्कुर्यादन्यत्रपतिनासहेति मघालयेगयाश्राद्धे वृद्धावन्वष्टकासुच नवदेवतमत्रस्याच्छेषंषाड्पौरुषं विदुः चतुर्विंशनिमतेपि। सर्वेभ्यप्रदद्यातपितृभ्यश्चतत्पत्नीभ्यस्तथैवच पिण्डांस्त्रिभ्यःपृथग्दद्यात्सहाभाद्रपदेद्विजइति स्मृतिसमुच्चयेपि पृथक्श्राद्धंतुमातृणांप्रकर्त्तव्यंविमत्सरैः। नवम्यांपितृपक्षेतुवृद्धौतीर्थेमहालये स्मृतार्थसारेपि ततभा-

तृयाद्वम्पृथक्प्रशस्तमिति देवजुर्रपिमातुर्गयाष्टकाद्वद्धौमृताहे च महालये अवश्राद्धं पृथग्देयं तन्त्रं पानुगतापदीति अयंविशेषःमृते पितरितमूर्ध्वं कजीवतितुमृतवर्गस्यैवेति पृथक्श्राद्धं जीवत्पितृकस्य नेत्येकेनवर्मविषयमितरन्ये ।

## मू० पुत्राःपञ्चम्याम् ॥ ६ ॥

कर्त्तुःस्युरितिशेषः पुत्रशब्दःपुन्नामनरकत्रःपुत्रहेतुः पूर्णातिथित्वात् । तथाचमनुः ।पञ्चम्यांशोभनान्पुत्रानिति उपलक्षणं चैतत् तथाचवायुः पञ्चम्यांचैवकुर्वाणःप्राप्नोतिमहतींश्रियं मार्कण्डेयोपि श्रियमाप्नोतिपञ्चम्यामिति अत्रैके मातुःक्षयाहेपार्वणं स्यादित्याहुः तथाचहरिवंशपुराणम् पितृपक्षेत्वमायांवापितृमातृक्षये यदि पितुस्तुपार्वणंकुर्यादेकोद्दिष्टंतुमातृकं तथापितुस्तुपार्वणंकुर्यादेकोद्दिष्टंतुमातृकम् तथापितुस्तुपार्वणंकुर्यात्प्रेतपक्षेमृतस्यतु पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवहि प्रेतपक्षेतिथिर्यस्यपितुरेकस्यपार्वणम् मातृभ्रातृपितृव्याणामेकोद्दिष्टंसदैवहीत्यादिवचनेभ्यः तदयुक्तम् एकोद्दिष्टस्यसापत्नविषयत्वेनाविरोधात् तथाचपुराणसमुच्चये अमायाञ्चक्षयोयस्यप्रेतपक्षेतथाभवेत् निरग्निरपिकुर्वीतमातापित्रोस्तुपार्वणम् अनग्निःपार्वणंयोनमातापित्रोःक्षयेहनि करोतिबुद्धिमोहेनसभवेत्पितृघातकः जमदग्निरपि आपःदापस्यपिण्डत्वमौरसोविधिवत्सुतः कुर्वीतदर्शवच्छ्राद्धंमातापित्रोःक्षयेहनि गौतमोपि आपाद्याःपंचमेपक्षेप्रेताख्येतुक्षयोयदि पार्वणन्तच्कुर्वीतवर्जयित्वाचतुर्दशीम् हेमाद्रावपि सपिण्डीकरणादूर्ध्वंपित्रोरेवहिपार्वणम् पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवहीत्यसंगतिः ॥

## मू॰ षष्ठ्यांदांतर्द्धिः ॥ ७ ॥

कर्त्तुःस्यादितिशेषः ऋद्धिर्द्युतविजयः उपलक्षणञ्चैतत् । तथाचवायुः षष्ठ्यांश्राद्धंतुकुर्वाणोद्विजास्संपूजयन्तिहि मार्कण्डेयेपि षष्ठ्यांपूज्योभवेन्नरइति अत्रविशेषःपुराणसमुच्चयेपि एकमातृद्विपितृकौमातरावन्यगोत्रजौ मातुःश्राद्धन्तुकुर्यातांषष्ठ्यांपुत्रावुभावपि स्मृतिसमुच्चयेपि देयंश्राद्धन्तुषष्ठ्यांतैर्योद्धरंशायनाःसुताः षोऽक्षिणश्चपितुश्चादौदद्युःपश्चात्तुवीजिनः अनेकमातृकस्यविशेषोगालवेनोक्तः अनेकामातरोयस्यश्राद्धेचापरपक्षिके । अर्घदानंपृथक्कुर्यात्पिण्डमेकंतुनिर्वपेदिति ।

## मू॰ कृषिःसप्तम्याम् ॥ ८ ॥

कर्त्तुःस्यादितिशेषः उपलक्षणञ्चैतत् तथाचवायुः कुरुतेयस्तुसप्तम्यांश्राद्धानिसततंनरः महासन्त्वमवाप्नोतिगणानांचाधिकोभवेत् मार्कण्डेयेपि गणाधिपत्यंसप्तम्यामिति अत्रैतद्विचिंत्यते रजस्वलायांपत्न्यामत्रश्राद्धंकार्यंनवा । तत्रैकआहुःनेति तथाच । श्राद्धीयाह्निसंप्राप्तेयस्यभार्यारजस्वला । श्राद्धन्तत्रनकर्त्तव्यं कर्त्तव्यम्पञ्चमेह्नीति तन्न मृताहेचपुत्रपत्न्याःस्वयङ्कर्तृकनिषेधत्वात् तथाचगौतमः नपुत्रोयुत्रदाभार्यासंप्राप्तेभर्त्तुराह्निके । रजस्वलाभवेत्सातुकुर्यात्तत्पञ्चमेह्नीति ।

## मू॰ वाणिज्यमष्टम्याम् ॥ ९ ॥

कर्त्तुःस्यादितिशेषः वाणिजशब्देनयथावणिजोऽनेकलाभःस्तथाष्टमीश्राद्धेनानेकफलमित्यर्थः तथाचवायुः संपूर्णांवृद्धिमाप्नोतियोष्टम्यांकुरुतेनरः मार्कण्डेयेपि अष्टम्यांवृद्धिमुत्तमामिति उपलक्षणंचैतत् तेनयथाफलमपीत्यर्थः । तथाचब्रह्माण्डे आपाढ्याः

पंचमेपचे गयामध्याष्टमीस्मृता चयोदशीगजच्छायागयातुस्यमुपै-
तृकमिति अत्र तदुच्यते किमपरपचिकंश्राद्धं सूतकान्तेस्यादुतनेति
तत्रैकश्राद्धः मासिकेऽब्दे तुसम्प्राप्तेऽप्यन्तरामृतसूतके वदन्तिशुद्धौ-
तत्कार्यंदर्शेवापिविचचणाइत्यादि वचनान्मासिकाब्दिकयोरेवाशौ-
चान्तेविहितत्वादपरपाचिकन्नेन तदयुक्तम् अस्यापिविहित-
त्वात् तथाचपुराणसमुच्चये पचश्राद्धे समारब्धेसूतकन्निपतेद्यदि
समाप्ततोहिपितरःसूतकान्तेविसर्जयेत् यदिनैवंनरःकुर्यात्सूतका-
न्तेसमापनम् प्राग्दत्तानिमनुष्येणश्राद्धान्यसुरतृप्तये इति पच-
श्राद्धं त्वापरपचकोपलचणम् अष्टम्यष्टकागोपि शुचीभूतेनदातव्यं
यातिथिःप्रतिपद्यते मातिथिस्तस्यकर्त्तव्यानत्वन्यावैकदाचनेति ।

## मू॰ एकशफन्नवम्याम् ॥ १० ॥

कर्तुःस्यादितिशेषः एकशफाश्वखरवेसराद्यस्तेषांद्वन्द्वेएकश-
फम् समृद्ध्युपलचणं चैतत् तथाचवायुः श्राद्धं नवम्याङ्कुर्वाणस्त्वैश्वर्यं-
यंस्त्रीपुत्राञ्चतेति स्त्रियोनवम्यामाप्नोतीति मार्कण्डेयः अत्र त-
त्सं दिह्यते जीवत्पितृकःकिम्मातुः श्राद्धन्नवम्याङ्कुर्यादुतनेति तत्रै-
केश्राद्धः अमाश्राद्धवच्छ्राद्धं श्राद्धं चापरपचिकम् नजीवत्पितृकः
कुर्यात्तिलहाद्यप्रजायतइत्यादिवचनान्निरग्निर्नेति अन्ये त्वाहुः ।
अन्वष्टक्यत्वविहितत्वात्कुर्वीतेति तदेतद्विचारणीयम् नजीवत्पि-
तृकशब्देनकिंमुख्यजीवत्पितृकमातृवित्र चयापरपाचिकश्राद्धस्यैव-
निषेधः आहोस्विज्जीवत्पितृकशब्देनजीवन्मातामहाद्युपलचकेन
जीवद्वर्गश्राद्धनिषेधः तत्रयदिजीवत्पितरिमुख्याधिकारिणोदाना-
भावाच्छ्राद्धमात्रस्यैवनिषेधइत्युच्यते तदाजीवत्सयद्विवर्गोदीतद्व-
र्गंतुपरित्यजेदित्यमृतवर्गश्राद्धविधायकस्यवैय्यर्थ्यंस्यादन्यत्रयथा-

देपिमातृश्राद्धस्याकरणाप्रसङ्गश्चस्यात् अथतयाऽऽत्वे नतत्कर्त्तव्य-
मर्हिमृतवर्गेविधायकवचनस्यवैयर्थ्यंतदवस्थमेव यदिजीवत्पितृक-
शब्देनजीवद्वर्गश्राद्धनिषेधः इत्युच्यते तर्हिमृतमातृकेसदाचारमा-
त्ताकरणस्यपरित्यागस्यादितितस्मात्कथमत्रसमाधिः उच्यते य-
द्यपि धर्मजिज्ञासमानानांप्रमाणम्परमंश्रुतिः द्वितीयंधर्मशास्त्रं-
तुतृतीयंलोकसंग्रहइतिपराशरेणलोकसंग्रहस्यप्रमाणमुक्तम् तथा-
पिस्मृतिसदाचारयोर्बाधेश्रुतिविरोधं विनास्मृतिबाधस्यान्याय्यत्वं-
स्मृतिनिषदाचारस्यबाधोन्याय्यइत्युक्तम्। तथाचचतुर्विंशतिमतम्
स्मृतिर्वेदविरोधेनपरित्याज्यायथाभवेत् तथैवलौकिकंवाक्यंस्मृति-
बाधात्परित्यजेत्। वसिष्ठोपि श्रुतिस्मृतिविहितोधर्मस्तदविरोधि-
शिष्टाचारःप्रमाणमिति तस्मात्सर्वोपिजीवत्पितृकोमृतमातृवर्गन-
वमीश्राद्धंस्वीकुर्यादित्यर्थः तथाचवचनमपि अन्वष्टक्यांगयाप्राप्तौ-
सत्यांचक्षयेऽहनि मातुःश्राद्धंसुतः कुर्यात्पितर्यपिचजीवति गया-
प्राप्तःप्रासङ्गिकोनतुद्देशतः। ननुचैवमन्वादद्यादौसर्वत्रजीवत्पि-
तृकःकुर्यादितिनचवाच्यम् अन्वष्टकादिकालत्रयस्यैवविशेषविधे-
रितरत्रनिषेधसिद्धेः यत्वन्वष्टकासुनवभिःपिण्डैःश्राद्धमुदाहृतमि-
तिनवदैवतमुक्तम् तत्सामान्यन्वष्टकात्रयविषयम् जीवन्मातामही-
विषयंवा नवम्यांत्रिपिण्डकादिनिवारकंवा अतश्चावलिदैवत्यादि
कंयथाधिकारङ्कर्त्तव्यमितिसिद्धं। अन्यथाजीवत्पितृकोऽवत्रया-
द्यादिकंकुर्यान्मृतमातृकोनवम्यांनेत्यनुचितापत्तेः एवमेकादशा-
हादावपिनियतश्राद्धेष्वेवगन्तव्यमितिसर्वंसमञ्जसं द्वादशदैवत्यं-
वात्रप्रपञ्चितमस्माभिरादिसूत्रइतिनात्रपुनरुक्तम्। निमित्तवत्त्वे-
त्वत्रमतिनिमित्तंश्राद्धानिकुर्यात्। तथाचकात्यायनः। द्रव्यनि-
निमित्तानिजायेरन्नेकवासरे। नैमित्तिकानिकार्याणिनिमित्ता-

त्यत्यनुक्रमात् । यत्तु नैकःश्राद्धद्वयंकुर्यात्समानेऽहनिकुत्रचिदितिप्र-
चेतसोक्तोनिषेधः सएकनिमित्ते नैवपुनःकरणविषयः । तथाचजा-
वालः । श्राद्धंकृत्वातुतत्रैवपुनःश्राद्धन्नतद्दिने नैमित्तिकन्तुकर्त्त-
व्यन्निमित्तानिक्रमेणत्विति ।

## मू० दशम्यांगावः ॥ ११ ॥

गावइतिद्विशफादुपलक्षणम् । तथाचमनुः दशम्यांद्विखुरं-
हः । वायरपि । कुर्वन्दशम्यांतुनरोवाक्षींप्रियमवाप्नुयादिति अव-
गवांसर्वसम्पत्तिमूलत्वात्तदभिधानेन दशम्यांप्राशस्त्यंसूचितम् ।
तथाचपुराणसमुच्चयेप्रशस्ताः पूर्णिमासुख्यास्तिथयःषोडशैवताः ।
तासांश्रेष्ठतमाप्रोक्तादशमीश्राद्धदायिनामिति दशम्यांपूर्णकाम-
तामिति मार्कण्डेयः गवांसम्पत्तिमूलत्वञ्चश्रुतिराह । गौर्वाइदएं
सर्वंबिभर्त्तीति दुग्धाज्यादिनादेवादितृप्तेरित्यर्थः तदुक्तं अग्नौ-
प्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्न-
न्ततःप्रजाइति । अत्रेदमुच्यते पार्वणैकोद्दिष्टयोरेकदिनसम्भवेकिं-
म्पार्वणंपूर्वंकर्त्तव्यमुतैकोद्दिष्टमिति तत्रैकश्राहः । यद्येकन्नभवेत्ता-
वदेकोद्दिष्टन्तुपार्वणम् । पार्वणंत्वभिनिर्वर्त्त्य एकोद्दिष्टंसमाचरे-
दिति जाबालोक्तत्वात्पूर्वंपार्वणमिति । तन्न । पाठादर्थस्यबलव-
त्वात् अतश्चैकोद्दिष्टंनिर्वर्त्त्यपार्वणंसमाचरेदितितत्रान्वयः ।
तथाचवृद्धयाज्ञवल्क्यःएकाहिकेसमुत्पन्नेपार्वणेचक्षयाहिके प्राक्
क्षयाहंप्रकुर्वीतपश्चात्प्राज्ञेनपार्वणम् । अन्यच्च दर्शेक्षयाहआह्-
न्नेद्वयंकुर्वीतयाज्ञिकाः । पूर्वंक्षयाहंनिर्वर्त्त्यपश्चाद्दर्शंसमाचरे-
त् । अथवापार्वणस्यपूर्वमुक्तिःपित्रोःपार्वणविषयः एकोद्दिष्टस्य-
पश्चादुक्तिःसपिण्डैकोद्दिष्टविषयेयुक्तमेव नचैकपाकेनश्राद्धद्वय-

मागङ्कनीयम् । एकमाक्ते नथ:कुर्यादेकोद्दिष्टन्नपार्वणम् रुम-वेद्गाम्यवाराहोविष्टाशौचप्रजन्माम्यितितेनैवोक्तत्वात् ।

## मू० परिचारकाएकादश्याम् ॥ १२ ॥

भवन्तीतिशेष: परिचारकादास्याद्युपजीविन: । उपलक्षणञ्चै-तत् तथाचमनु. । एकादश्यान्तथारूप्यं ब्रह्मवर्चस्विन: सुतानिति वायुरपि वेदांश्चैवाप्नुयात्सर्वान्विप्राणांसंपदन्तथा । एकाश्यांपरं स्थानमैश्वर्यमन्नतिन्नयेति । अत्रै तच्चिन्त्यते अपुत्रादीनामेकोद्दि ष्टत्वकिन्तिथिनियमोस्ति वानवेति तत्रै कश्चाहु: संबन्धिबान्धवा-दीनामकोद्दिष्टंमदैवहि । अपुत्रायेमृताकेचित्पुरुषावा स्त्रियोपिवा तेषाममपिचदेयंस्यादेकोद्दिष्टंनपार्वणम् । सपिण्डीकरणादूर्ध्वंयत्र यत्रप्रदीयते । भ्रात्रे भगिन्यैपुत्रायस्वामिने मातुलायच मित्राय-गुरवेश्राद्धमेकोद्दिष्टं मघालयइति कात्यायनापस्तंबादि वचना न्महालयेयत्रतत्रापीति । तदयुक्तं तिथिनियमस्योक्तत्वात् तथाचपु-राणसमुच्चये अपुत्राणाञ्च बन्धूनाम्ऋत्विगाचार्ययोर्गुरो: । एकोद्-दिष्टंसदाकार्यंपितृपक्षे विशेषत: । नपार्वणेऽधिकारोस्तियेषा कन्यागतेरवौ । एकादश्यांतुकृष्णायां तेषांश्राद्धं समाचरेत् अन्यच्च एकादश्यांनकुर्वीत एकोद्दिष्टानिकृत्स्नश: । यस्माद्धिदैवतोविष्णु: पितृवर्गस्यनित्यश: । वृद्धशातातपोपि पितृस्वस्मातृस्व स्रादिपितृ व्यभ्रातृमातुलै: अनपत्यासुभार्यासु एकोद्दिष्टं समाचरेत् । मातु-लोभागिनेयाश्चस्वस्त्रीयोभ्रातृजस्तथा । श्वशुरश्चगुरुश्चैव सखामा-तामहस्तथा एतेषाञ्चैवभार्याणांस्वसुर्मातु: पितुस्तथा । श्राद्धमाव-श्यकर्तव्यमितिवेदविदांस्थितिरिति । भागिनेय:पितृव्यपुत्रोपुत्र-दत्तपौनरुक्त्यं मातामह:सपत्नमातृ पितासाग्नेरायचैकोद्दिष्टमेव ।

तथाचपुराणसमुच्चये अग्निमन्तोद्विजायेतु तेषांकन्यागतेरवौ ।
पितृव्यभातृ बन्धूनामेकोद्दिष्टमप्रशस्ततइति ॥

मू० धनन्धान्यस्सुतन्पशून्रौप्यं हिरण्यन्द्वादश्याम् ॥ १ ३ ॥

कर्त्तुःस्यादितिशेषः धनंरजतादि । तथाचमनुः द्वादश्यांजातरूपन्तुरजतंकुप्यमेवचेति । उपलक्षणञ्चैतत् तथाचवायुः द्वादश्यां जनलाभञ्चराज्यमाहु र्वसूनिचेति । यत्तु उच्यते दैवशात्पित्रोः क्षयाहैक्येकथंक्रमइति । तत्रकार्ष्णाजिनिः पित्रोःश्राद्धेचसम्प्राप्तेनवैपर्युषितेपिवा पितृपूर्वंसुतःकुर्या दन्यथासन्नियोगतः । अन्तलसपिण्डश्राद्धेषु आसत्तिःसंबन्धासत्तिःसंबन्धनैकटंक्रमेणत्यर्थः।तथाचऋष्यशृङ्गःभवेदादिसपिण्डानान्तन्त्रेण श्रपणन्तथा । संबन्धासत्तिमालोच्यतत्क्रमाच्छ्राद्धमाचरेदिति । ननुचपित्रोःक्षयाहैकिमेकपाकेनोतपृथक्पाकेनश्राद्धद्वयमिति ।सर्वे के एककालेगतासूनां बहूनामथवा द्वयोरित्यादिना एकपाकेनेत्याहुः । तदयुक्तम् तस्यएककालविषयत्वात् अन्यदैकदिनेतुपृथग्विधिः । तथाचपठन्ति मातापितृमृता हैक्यंकालेनापिभवेद्यदि । पृथक्पाकंपितृश्राद्धं मातुश्चतदनन्तरमिति सपिण्डान्तुनृसिंहपुराणे । एकेनैवतुपाकेन सपिण्डानांमहालये तन्त्रेणश्रपणङ्कुर्यीच्छ्राद्धं दद्यात्पृथक्पृथगिति । विष्णुधर्मोत्तरेच प्रेतपक्षेगयायाञ्च गतासूनांसमेहनि । तन्त्रेणश्रपणङ्कुर्याच्छ्राद्धन्दद्यात्पृथक्पृथगिति ॥

मू० कुप्यंज्ञातिश्रैष्ठ्यञ्चत्रयोदश्याम् ॥ १४ ॥

कर्त्तुः स्यादिति कुप्यंहेमरजतेभ्योन्यधातुजम् । उपलक्षणञ्चैतत्

तथाचमार्कण्डेयः । प्रजांमेधाम्पशून्पुष्टिम् स्वातन्त्र्यंदृष्टिमुत्तमाम् दीर्घमायुरथैश्वर्यं कुर्वाणस्तुत्रयोदशीमिति । ननुचत्रयोदश्यांकृष्णापक्षे यःश्राद्धङ्कुरुतेनरः । पञ्चत्वंतस्यजानीयाज्ज्येष्ठपुत्रस्य निश्चितमिति अङ्गिरसाश्राद्धस्यैव प्रतिषिद्धत्वात्कथंफलश्रुतिरितिउच्यते तस्यैकवर्गश्राद्ध विषयत्वादित्यदोषः । तथाचकार्ष्णाजिनिः श्राद्धंनैकस्यवर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्ताअस्यगेऽस्युःप्रजांहिंसंति तत्रतद्गतिश्चनैतच्चिन्त्यस्ते । किमनुगमनमृतानां स्वमृताहेश्राद्धं स्यादुतभर्तृमृताहइति । तत्रैकेआहुः मासपक्षतिथिस्पृष्टे यस्मिन्याम्रियतेऽहनि । प्रत्यब्दन्तुतथाभूतंक्षयाहं तस्यतद्विदुरित्यादि वचनात्स्वमृताहएवेति।तदयुक्तम् भर्तृक्षयाहेविहितत्वात् तथाच पुराणसमुच्चये अग्रत.पृष्ठतोवापियत्पत्न्या म्रियतेतुया । तस्याः श्राद्धप्रदातव्यम्भर्तुरेवक्षयेऽहनि । रेणुरपि एकचित्यांसमारूढाद्वितीयेऽग्निपतिव्रता । तस्याःपिण्डोदकम्पुत्रः प्रकुर्यात्पितृवासरे । पठन्तिच प्रत्यक्षेवापरोक्षेवातद्भक्त्याम्रियतेतुयः । तस्याःश्राद्धम्प्रकुर्वीत भर्तुरेवक्षयेऽहनि । अत्रैतत्सन्दिह्यते भर्तृक्षयाहेकिन्तस्यापृथक्पिण्डतैक पिण्डेद्वयोरुद्देशः । तत्रलौगाक्षिः मृतेऽहनिसमासेन पिण्डनिर्वपणम्पृथक् । नवश्राद्धन्तुदम्पत्योरन्वारोहणएवतु अस्यार्थः। दम्पत्योरन्वारोहणेमृताहेसमासेनपिण्डनिर्वपणं नवश्राद्धम्पृथगित्यर्थः नवश्राद्धंषोडशोपलक्षणम् । समासःपाकाद्यैक्यन्तुशब्दोविशेषः ततश्च दम्पत्योरेकचि तान्वारोहणे षोडशश्राद्धेष्वेवपृथक्पाकैः पिण्डोऽन्यत्र पाकैक्येनैकपिण्डेद्वयोरुद्देशः मृततिथौभिन्नेत्वाब्दिक प्रेतश्राद्धयोः पृथक्पिण्डएवेति । निधितप्रेतदिनेत्येव शब्दार्थः । तथाच एकचित्यांसमारूढौ दम्पतीनिधनंगतौ । पृथक्श्राद्धन्तयोः । कुर्यादोदनञ्चपृथक्पृथगिति तथा । एकचित्यधिरोहेच तिथिरेकं

वजायते एकपाकेनैकपिण्डेद्वयोर्गृहीतनामनीइति देशकालद्रव्यदेवकर्त्तृक्वेतान्विकोविधिरितिच । अपरेके भर्त्तुःक्षयाहेसर्वासामेव पृथक्पिण्डमित्याहुः । तन्न तस्यपतिव्रताविषयत्वात् तथाचभृगुः यासमारोहणङ्कुर्याद्भर्त्तुश्चित्यांपतिव्रता । तांमृताहनिसंप्राप्ते पृथक्पिण्डेनियोजयेत् । प्रत्यब्दञ्चनवश्राद्धं युगपत्तुसमापयेत् । अपिच पुराणसमुच्चये । याकाचिन्म्रियतेनारी पत्यासहपतिव्रता तस्याः श्राद्धंपृथक्कुर्यादेकोद्दिष्टविधानतः । विधानतद्इति युगपत्समापयेदितिच । भर्त्तुःक्षयाहेपूर्वं भर्त्तुर्द्विजोपवेशनंपश्चात्स्त्रिया इत्येवक्रमेणैकदैवतसर्वं श्राद्धमित्यर्थः । पतिव्रातत्वात् तथा अथकेचिन्नेच्छन्तिपृथक् श्राद्धन्तुयोषितां । वदन्तिपतिनासार्धंमूढास्तेमेमतेनतु सपिण्डीकरणादूर्ध्वं पृथक्कामविधीयते । नचालिशानांतेषां वेश्राद्धंशाक्यमजानतां पृथक्श्राद्धस्वमातृणां कर्त्तव्यंवाप्दिविमिति । पठन्ति परदेशेग्दतोभर्त्तुश्चत्वानारीपतिव्रता तिथिरेकाविशुद्धोस्यात्पिण्डन्दद्यात्पृथक्पृथगिति । अत्रविशेषः अनेकस्त्रीभिरनेकभृत्यैर्वास्वामिना सहस्नेहानुमरणे पाकैक्यं नैव स्वामिगोत्रेणैव पृथक्पिण्डदानंकर्त्तव्यम् । तथाचपुराणसमुच्चये व्रतानामथभृत्यानांभार्याणांपतिनासह । तन्त्रेणश्रपणङ्कृत्वा श्राद्धंस्वामिक्षयेहनि श्राद्धम्पृथक्पृथक्कुर्यात् स्वामिगोत्रेणतत्त्वगः । स्वामिचित्यधिरोहेणभृत्याःतस्यस्वगोत्रतइति । भृगुरपि एककालेगतासूनां बहूनामथवाद्वयोः तन्त्रेणश्रपणंकृत्वा श्राद्धंकुर्यात्पृथक्पृथक् । पूर्वकस्य मृतस्यादौद्वितीयस्यततः पुनः । तृतीयस्यततःकुर्यात्सन्निपातेप्वयंक्रमः पूर्वकस्यमृतस्येति ज्येष्ठानुक्रमेणानघुना सुत्तमाधमक्रमेणेत्यर्थः । यत्त्वेकचित्यांसमारूढायदि वचनंपृथक्पिण्डदानमुक्तम तदेकपतिव्रतस्त्रीविषयमित्यविरोधः । स्मृत्यर्थसारे सहदहनेऽपिण्डश्राद्धादौ पाकैक्यङ्कालैक्यञ्चकर्त्तव्यमिति ।

मू॰ युवानस्तत्रम्रियन्ते शस्त्रहता-श्चतुर्द्दश्याम् ॥ १५ ॥

युवानोयेम्रियन्तेतेशस्त्रहताश्च तत्रापरपक्षेचतुर्द्दश्यामेकोद्दिष्टमाप्नुवन्तीत्यर्थः। तथाचस्मृतिचन्द्रिकायां। चतुर्द्दश्यांतुयच्छ्राद्धं सपिण्डीकरणे कृते। एकोद्दिष्टविधानेन कुर्याच्छस्त्रेणघातितइत्यादि। मार्कण्डेयोपि युवानःपितरोयस्यमृताः शस्त्रेणवाहताः तेनकार्यंचतुर्द्दश्यान्तेषामतृप्तिमभीप्सतेति। ननुचात्रशस्त्रहतस्यैवनान्यस्येति मिताक्षरादिनिबन्धकृद्भिर्नियमितत्वात्कथंयुवानइत्युक्तम। तत्रचवृद्धयाज्ञवल्क्यः। श्राद्धदानेचतुर्द्दश्यांविनाशस्त्रहतंस्मृतम्। ज्येष्ठपुत्रोविनश्येतपितृणाञ्चाप्यधोगतिरिति अतोयुवानइतित्रयोदश्यांयोजनीयमितिचेन्नैवम् युवशब्दस्यविशेषादिनादंशसर्पहताद्युपलक्षकत्वात्। तथाचवृद्धयाज्ञवल्क्यः। मृत्काष्ठोपललोहेषुविद्युद्व्यालविषादिभिः नखिदंष्ट्रिविपन्नायेतेषांशस्ताचतुर्द्दशी जलादिषुविपन्नायेवह्नौवाकरकान्विताः पक्षिसर्पविपन्नायेतेषांशस्ताचतुर्द्दशी कण्ठपाशविपन्नायेयोगिनीचापमृत्युना लूताद्दष्टविपन्नायेविप्रशापहताश्चये शीतवातविपन्नायेशस्त्रघातहतास्तथा पापमृत्युहतायेचतेषांशस्ताचतुर्द्दशी। अथवायुवानस्तत्रम्रियन्तेइतिपाठस्तु वयन्तुत्रयोदश्यांश्राद्धप्रशस्तम् तस्मात्स्वगृहेयुवानोनम्रियन्तइत्यर्थस्त्रयोदश्यामेव। तथाचमहाभारते जीतोनांतूत्तरश्रेष्टःकुर्याच्छ्राद्धन्त्रयोदशीम् नावश्यन्तुयुवानोस्यप्रमादायतनिग्रहइति शस्त्रहतइत्येकत्वन्तत्रैकपार्वणंसूचयति तेनपित्रादित्रयेशस्त्रहतेपार्वणमित्यर्थः अत्रैकयाज्ञः। त्रयाणामपिशस्त्रहतत्वे पृथक्पृथगेकोद्दिष्टमेवेति तदयुक्तम्। मार्क्कण्-

स्यैवातिदेशात् तथाचस्मृतिदर्पणे एकस्मिन्वाद्वयोर्वापिविदुरक्ष-स्ते यवामृतौ एकोद्दिष्टं सुत:कुर्याच्चयाणांदर्शवद्भवेत् तथापिमा-दयस्तयोयस्यगस्तघातात्वनुक्रमात् ससुत:पार्वणंकुर्यात्पित्रादेर्न-पृथक्पृथगिति एकोद्दिष्टमितिशेष: स्मृतिचन्द्रिकायामपि । एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति त्रयाणांपार्वणमित्यर्थ: अतै-वमाङ्ग: । रणेसंमुखप्रहारैर्हतशूराणामपिशस्त्रहतत्वाच्चतुर्दश्यां-मेवेति । तदयुक्तम् । तेषांपरमगतित्वात् तथाचपुराणसमुच्च-ये विलयरणयज्ञयोगोन्नाह्मणाम्निलैपिण: स्वामिपादाग्रसंलग्नायां-तिगस्ते श्वखण्डश: नतेशस्त्रहतैस्तुल्यापुराणज्ञै कदाकृता: । नद-तिर्यक्नमायांतिप्रयांतिसुरमन्दिरम् । श्रूयतेचात्रगाथेयंभार्गवांगि-रसोर्मते द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनौ परिव्राड्योगयुक्त-श्वरणेचाभिमुखोहतइति । यत्तु म्रियन्तेपितरश्चास्ययेशस्त्रै-रवरणेहताइतिमनुनाचतुर्दश्यामुक्तम् । तत्पराङ्मुखहतादिवि-षयमित्यविरोध: । नचसंमुखपराङ्मुखादिशस्त्रहतयो:साम्यसूचि-तम् तस्मात्संमुखरणहतानांचतुर्दश्यांश्राद्धंनेति । अतएवापवा-दापुराणसमुच्चये मृताश्चान्याश्चयङ्गैर्भाइयकिविशांस्त्रिय: मृता-श्चपतिभि:सार्द्धंप्राप्तालोकंसनातनम् । नैताशस्त्रहतैस्तुल्या: प-श्चात्या:पतिनासह म्रियन्तेपतिभक्त्यातुदुःखेकंप्राप्नुवन्तिता अत्र-संन्यासिनांश्राद्धं कार्यंत्वन्यचतुर्दशी तप:संन्यासयोगेननतेयां-तिपरांगतिं येम्रियंत्यातुरत्वेनप्रव्रज्यनगनांवुभि: नैवशस्त्रहता-स्तेपितस्यांतरगर्हिता: नशस्त्रहतभिस्तुल्या आतुरत्वान्मृता-यत: एतेषांनापमृत्युंतंपुराणज्ञावदन्तिहि अत्यातुरत्वात्संन्यासे नात्रश्रुतिविरोधनम् । यथाश्रूयतेगीतंपुराणज्ञै:पुरातनै: नवेदव-चनात्तातनलोकवचनादपि । मतिरुत्क्रमणीजातिप्रयागमरणंप्रति

एतद्व्यतिरिक्तोऽन्यचतुर्दश्यां श्राद्धकरणेतर्नैवोक्तः जन्मांधपंगु-
विकलावाग्जडालुधुब्धुका: नकुर्वंतिचयेश्राद्धंकृष्णपक्षेचतुर्दशीम्
ज्ञात्वाशस्त्रहतान्वंधूंस्तेम्रियन्तेचिरायुष: प्रयांतिपरमंघोरन्तेपासे-
वहिंशस्त्रतद्गति नचैतेचतुर्दश्यामेयप्राप्नुवंतीतिवाच्यम पिताम-
हाद्यर्थमिप्राप्तेः तथाचसर्वैव चदत्वापरमार्यमार्ग्वे योददातिच-
तुर्दशीम् पितृश्चाचोच्यतेसद्भिरिहलोकेपरत्रच तस्माच्छ्राद्धम्पितृ-
णान्तुप्राक्पश्चाच्चतुर्दशीम् ददाच्छस्त्रहतेभ्यश्चइति प्राहपुराश्रु-
तिरितिच । चतुर्दश्याम्पूर्वमष्टम्यादौपश्चादमायामित्यर्थः । का-
त्यायनोपि शस्त्रादिभिर्हतस्यापि कुर्यात्प्रतिदिनंसुतः । पार्वणंकृ-
ष्णपक्षेतुवर्जयित्वाचतुर्दशीम् उशना: । यदिकालान्तरेवापिय-
दाशस्त्रादिपद्यते सोपिशस्त्रहतोज्ञेय: तस्यशस्ताचतुर्दशी वृह-
न्मनु: महालयेचतुर्दश्यां मघायांपुत्रवानपि पिण्डनिर्वपणं कु-
र्यादास्यशस्त्रहत: पिता । तथा कृष्णपक्षेचतुर्दश्यांमघायु-
क्तेदिनयदि पिण्डनिर्वपणं कुर्यात्तृप्त्यर्थंम शस्त्रघातिनइति वच-
विशेषोप्यत्रयाज्ञवल्क्येनोक्त: । शस्त्रमृत्यु: पितायस्यशस्त्रघातिपि-
तामह: । पार्वणन्तस्यविच्छे वन्तयस्तेशस्त्रघातक: । यथाविहङ्गप-
क्षाभ्यामङ्गमाश्रित्यतिष्ठति तथापिताचहेश्चपितामहसमाश्रिता
वितितत्सदाचाराभावाच्चिन्त्यम् । यदात्वस्यामेवचतुर्दश्यांपित्रो:
क्षयाहस्तदापिप्रेतपक्षमृतत्वात्पार्वणमेवेतिकेचित् तन्न भापाव्या:
पञ्चमेपक्षेप्रेताख्येतुक्षयोयदि । पार्वणन्तत्कुर्वीतवर्जयित्वाचतु-
र्दशीमिति गौतमोक्ते: । साग्निविषयंपार्वणस्येत्यविरोध: ॥

मू० अमावास्यायाᳫं सर्वमित्यमावास्यायाᳫंसर्वमिति ॥ १६ ॥

## * इति श्रीकात्यायनविरचितंश्राद्धसूत्रम् *

सर्वमितिसर्वकामाः अस्याममावास्यायां श्राद्धकरणेनसर्वकामां ल्लभतइत्यर्थः। तथाचपुराणसमुच्चये श्राद्धङ्कुर्वन्नमावास्यांयत्नेनपुरुषः शुचिः सर्वान्कामानवाप्नोति तिथ्यान्तिथ्यामुदायुतइति । अस्या निरुक्तिस्तत्रैव । कलानामाप्यायनार्थंरविं विशतिचन्द्रमा सुषुम्नाख्याकलायासौसूर्यस्या नवमास्मृता । विशतिह्यौलवौतस्यांचन्द्रमाः सूर्यमण्डले । अमाञ्चन्द्रस्यसंयोगादमावास्यां विदुर्बुधाइति । अपरपक्षेश्राद्धासंभवेयमः । हंसेवर्षासुकन्यास्थेशाकेनापि गृहेवसन् । पञ्चम्योरन्तरेदद्यादुभयोरपिपक्षयोः । सुमन्तुः कन्यागतेमहाराज यावत्तिष्ठेद्विभावसुः । तावत्कालभवेद्देयं वृश्चिकंयावदागतम् । येयन्दीपान्विताराजन् ख्यातापञ्चदशीभुवि । तस्यांदेयन्नचेद्दत्तं पितृणाचैन्महालयइति । अवशुक्लापञ्चमी तुलासंक्रान्तिदीपामावास्या वृश्चिकसंक्रान्तश्चेतिपूर्वं पूर्वासम्भवेउत्तरोत्तरा श्राद्धकालाः त्यर्थः । हिकतिर्मङ्गलार्था इतिशब्दःसमाप्तौ अत्रैतच्चिन्त्यते ।
[illegible] श्राद्धन्त्रिपिण्डकंकुर्यात् दुतषट्पिण्डकमिति । तत्रैकेआहुः अपित्रादिभ्योदातुमनधिकारात्त्रिपिण्डकमेवेति । तदयुक्तम् क्षयाहश्राद्धं विनाषट्पिण्डकस्यापि विहितत्वात् । तथाच स्वभट्टप्रभृतिभिभ्यः पितृभ्यस्ततथैवच विधवाकारयेच्छ्राद्धम् यथाकालमतन्द्रितेति । षट्पिण्डकमित्यर्थः । कारयेदितिस्वार्थेणिच् । अधिकाराविषयोवा अपरेआहुः मृता-

स्वाहमपिपत्नीकर्तृकं सर्वत्रपार्वणमेवेति । तथाचलौगाक्षि:स-पिण्डाभावेस्वयं पत्नीस्वभर्तृणाममन्त्रकम् । सपिण्डीकरणङ्कुर्यात्सुत: पार्वणमेवचेति । सुमन्तुरपि अपुत्रेप्रस्थितेकर्तानास्तिचेच्छ्राद्धकर्मणि तत्पत्न्यपिकुर्वीत सपिण्डस्यार्वणन्तथेति । तदप्ययुक्तं अनयोर्वचनयो:क्षयाहव्यतिरिक्तविषयत्वाद्दर्शापरपक्षमृतिविषयत्वाच्च तथाच भर्तु:श्राद्धन्त्वयानारीमौढ्यात्पार्वणमाचरेत् । नतेनाप्यायतिभर्तात्सरवाच नरकंव्रजेदिति । पार्वणनिषेधस्यक्षयाह विषयत्वावगमात् । दर्शापरपक्षमृतौतुल्यन्यायत्वेन उचितत्वादित्यलमतिविस्तरेणेति भद्रम् ॥

स्मृतेरनेकविषयात् अनन्तत्वाच्चसर्वथा । तत्वंज्ञातुमशक्यत्वाद्-न्यासानम्यजल्पितै: ॥१॥ स्वबुद्धिकल्पितंनेह वचनंलिखितंमया । दृष्टंयुक्तमयुक्तंवा सम्यक्तम् मेनदूषणम् ॥ २ ॥ दृष्टंयच्चाल्पदोषेषु निबन्धेषुचयद्रतम् । युक्तंयुक्त्यविरुद्धं यत्तत्पठन्तीत्युदाहृतम् । ३ ॥ प्रमाणमप्रमाणंवा सर्वज्ञ: कर्तुमर्हति । दृष्टेयुक्तेचविज्ञानामोमोहज्ञै: कर्तुमिष्यते ॥ ४ ॥ कदाचिन्मयिपरगान: किमियता दोषोनिबन्धेभवेत् । सूक्ष्मेदधुना तनैरपिकृते ग्रन्थेकथमादर: ॥ इत्थं हि कथयन्त्यनल्पमतय माग्रत्यदोषज्ञधी: सन्तो सन्तमिमन्निबन्धमपिनं किंवा दोषमती यदि ॥५॥ बाणव्योमेषुविध्वदे १५०५ वर्षेकार्त्तिकमासके । कृष्णमिश्रोऽकरोद्ग्रन्थं शुक्लपक्षेशुभम् ॥ ६ ॥

इत्यागमविद श्रीमदनिरुद्धात्मज श्रीविश्वमित्रनन्दन:
कृष्णमिश्रकृती चरकालिकायां सूक्ष्मो
ग्रन्थ चावटकरणं समाप्तम् ।

धमाताचर्य गुरुचरणिकाणूजुकृति: ॥

ससाक्षप्रदानम् । २ ॥ उद्धृत्यघृताक्तमन्नम् पृच्छत्यग्नौकरिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं दत्वा पात्रमालभ्य-जपति पृथिवीते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति वैष्णव्यर्चा यजुषा वाङ्गुष्ठमन्नेऽवगाह्यापहता इति तिला-न्विकीर्योष्णं ठं॰ स्विष्टमन्नन्दद्याच्छक्त्या वाश्नत्सु जपेद्व्याहृति । पूर्वाङ्गायत्रीं ठं॰ सप्रणवां ५ सकृत्त्रिर्वा रक्षोघ्नीः पितृमन्त्रान्पु-रुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान्ज्ञात्वान्नम्प्रकीर्य सकृ-त्सकृदपो दत्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधुमध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोधृ-त्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यादाचान्तेष्वित्येके-आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यादघोराः पितरः सन्त्विति चोक्ते गोत्रन्नो वर्द्धतां वर्द्धतामित्युक्ते दातारो नोऽभिवर्द्ध-न्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्वित्या-शिषः प्रतिगृह्य स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य स्वधां वाच-यिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्यु-ऊँमित्युत्तानम्पात्रङ्कृत्वा यथाशक्ति दक्षिणान्दद्याद्ब्राह्मणेभ्यो विश्वे-देवाः प्रियन्तामिति दैवे वाचयित्वा वाजे वाजे वतेति विसृज्यामा वाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ॥३॥ अथैकोद्दिष्टमेकोऽर्घं ए-कम्पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदि-तमिति तृप्तिप्रश्नः सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्था-नेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥ ४ ॥ ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सति-लगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकम्प्रेतस्य प्रेतपात्रम्पितृ-पात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेतेनैव पिण्डो व्याख्यातोत-

कर्० ठं० संवत्सरे सम्वत्सरेप्रेतायान्नन्दद्याद्यस्मिन्नहनिप्रेतः
स्यात् ॥ ५ ॥ आभ्युदयिकेप्रदक्षिणमुपचारः पूर्वाह्ने पित्र्यमन्त्रव-
र्ज्जंजपऋजवोदर्भायवैस्तिलार्थाः सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्न-
मितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डानांदीमुखान्पितृनावा-
हयिष्यइतिपृष्ट्वावाहयेत्यनुज्ञातोनांदीमुखाःपितरःप्रीयन्तामि
त्यक्षय्यस्थानेनांदीमुखान्पितॄन् वाचयिष्यइतिपृष्टावाच्यतामि-
त्यनुज्ञातोनांदीमुखाः पितरःपितामहाःप्रपितामहामातामहाप्र-
मातामहावृद्धप्रमातामहाश्चप्रीयन्तामितिनस्वधांप्रयुंजीतयुग्माना-
शयेदत्र ॥ ६ ॥ अथतृप्तिर्ग्राम्याभिरोषधीभिर्मासंतृप्तिस्तदभावआ-
रण्याभिर्मूलफलैरोषधीभिर्वासहान्नेनोत्तरास्तर्पयंति छागोस्रकेणा
नालब्धक्रीत्वालब्ध्वावास्वयं कृतानाहृत्यपचेन्मासद्वयन्तुमत्स्यैर्मा-
सत्रयन्तुहारिणेनचतुरस्त्रौरभ्रेणपञ्चशाकुनेनषट्छागेनसप्तकौर्म्मे-
णाष्टौवाराहेणनवमेषमाऽसेनदशमाहिषेणैकादशपार्षतेनसंव-
त्सरन्तुगव्येनपयसापायसेनवावार्ध्रीणसमाऽसेनद्वादशवर्षाणि ॥ ७ ॥
अथाक्षय्यतृप्तिः खड्गमाऽसङ्कालशाकंलोहछागमाऽसम्मधुमहाश-
ल्कोवर्षासुमघाश्राद्ठं० हस्तिछायायांचमन्त्राध्यायिनःपूताशाखा-
ध्यायिषडङ्गविज्ज्येष्ठसामगोगायत्रीसारमात्रोपिपञ्चाग्निः स्नात-
कस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णोद्विजाग्र्यपाठकोब्राह्मोढापुत्रश्चेतिपंक्ति
पावनावागीश्वरो याज्ञिकश्चनियोज्यावभावेप्येकंवेदविदंपंक्ति-
मूर्द्धनिनियुञ्ज्यादामहस्मात्पंक्तिम्पुनातीतिवचनात् ॥ ८ ॥ अथका-
म्यानिभवन्ति स्त्रियोप्रतिरूपाःप्रतिपद्द्वितीयायाऽस्त्रीजन्माऽश्वास्तृ-
तीयायांचतुर्थ्यांक्षुद्रपशवःपुत्राःपञ्चम्यांद्युतर्द्धिःषष्ठ्याङ्कृषिःसप्तम्यां
वाणिज्यमष्टम्यामेकशफन्नवम्यांदशम्याङ्गावः परिचारकाएका-
दश्यामनंधान्यंद्वादश्यांपुत्रपठन्रौप्यं हिरण्यंकुप्यंज्ञातिश्रैष्ठ्यन्त्र-
योदश्यांयुवानस्तत्रम्रियन्तेशस्त्रहतस्यचतुर्दश्याममावास्यायाऽ स-
र्वंमित्यमावास्याऽसर्वमिति ॥ ९ ॥

इतिश्राद्धकल्पसूत्रङ्कात्यायनाचार्यकृतम्परिशिष्टंसमाप्तम् ।

## अथ पार्वण श्राद्धस्या नुक्रमणिका ॥

सेक.प्रतिज्ञागायत्रीदेवताभ्यस्तथासनम् आवाहनार्घदाना-
निगन्धादीनांसमर्पणम् ॥ १ ॥ मण्डलान्याकृतद्विचाग्नौभूरश-
मिनेतथा परिवेषोमधूत्सर्गोपात्रालम्भोन्नदानकम् ॥ २ ॥ अन्न-
हीनचगायत्रीमधुवातांततोजपेत् विकाराचमनञ्चायगायत्रीस-
धुवेतिच ॥ ३ ॥ वेदिकांचततः कुर्यात्तत्रैव्ह्रे खनकंतथा उल्मुक-
भ्रामणञ्चाथरेखयोःकुशधारणम् ॥ ४ ॥ देवताभ्यस्तथापिण्डस्था-
नेतत्रावनेजनम् पिण्डदानमुपस्पर्शोद्विःश्वासयमनन्तथा ॥ ५ ॥
पिण्डोपरिप्रत्यवनेजनन्नीव्याश्चश्रंसनं सूत्रदानम्पिण्डपूजाजलपु-
ष्पाक्षतान्क्षिपेत् ॥ ६ ॥ अक्षय्यवादोवार्धारागोत्राशीःप्रार्थनन्ततः
पितृपीडनमाघ्राणम्पिण्डोत्थापनकन्तथा ॥ ७ ॥ चालनञ्चार्घपा-
त्राणांदक्षिणाचविसर्जनं देवताभ्योजपोरक्षादीपनिर्वापनंततः ॥
८ ॥ आचम्यचततोब्रूयात्प्रमादात्कुर्वतमिति एवंपार्वणश्राद्ध-
स्यानुक्रम.कथितोबुधैः ॥ ९ ॥

इति पार्वण श्राद्धस्यानुक्रमणिका ॥

